कार्यमात्रं च यः स्वप्नो जीर्णान्ते फलवांस्तु सः ।
एतांश्चान्यांश्च दुःस्वप्नान् दृष्ट्वा रोगी विनश्यति ॥ २६ ॥
स्वस्थस्तु संशयं गत्वा धर्मशीलो विमुच्यते ।
यद्यदेव द्विजादीनां स्वप्ने शीतकृशात्मनाम् ॥ २७ ॥
मलिनाम्बरपुष्पाणां दर्शनं न प्रशस्यते ।
तेषामेव तु हृष्टानां शुद्धपुष्पाम्बरात्मनाम् ॥ २८ ॥
दर्शनं शस्यते स्वप्ने तैश्च संभाषणं शुभम् ।
प्रासादवृक्षशैलांश्च हस्तिगोवृषपूरुषान् ॥ २९ ॥
अधिरोहन्ति ये स्वप्ने तेषां स्वस्त्ययनं कृतम् ।
सूर्यसोमाग्निविप्राणां नृणां पुण्यकृतां गवाम् ॥ ३० ॥
मत्स्यामिषस्य चाषस्य दर्शनं पुण्यमुच्यते ।
शुक्लपुष्पादर्शच्छत्रग्रहणं तोयलङ्घनम् ॥ ३१ ॥
स्वरक्तदर्शनं चैव सुरापानं च शस्यते ।
गवाश्वरथ्यानं च यानं पूर्वोत्तरेण च ॥ ३२ ॥
रोदनं पतितोत्थानं रिपूणां निग्रहस्तथा ।
पङ्ककूपगुहाभ्यश्च समुत्तारोऽध्वनस्तथा ॥ ३३ ॥
एवंविधानि चान्यानि सिद्धये मुनयोऽब्रुवन् ।
अदारुणत्वं रोगाणां वैद्यभैषज्यसंभवम् ॥ ३४ ॥
धृतिर्जन्मानुकूल्यं च सत्त्वं धर्मश्च भूतये ॥

दृष्ट्वा स्वप्नान् दारुणान्वेतरान् वा पूतः स्नातः सर्षपानग्निवर्णान् ।
हुत्वा सावित्र्या सर्पिषाक्तांस्तिलांश्च पूतः पापैर्मुच्यते व्याधिभिश्च ।
कौमारभृत्यमतिवर्धनमुक्तमेतज्ज्ञात्वा हि देहगतमिन्द्रियमादिरूपैः ।
श—श्चिकित्सितपरांस्तु विवर्जयध्वं शास्त्रं च धर्ममतयः परिपालयध्वम् ।
इति ह स्माह भगवान् कश्यपः ॥

(इति) वृद्धजीवकीये कौमारभृत्ये वात्स्यप्रतिसंस्कृते इन्द्रियस्थाने ओषधभेषजीयं नामेन्द्रियम् ॥

समाप्तानि चेन्द्रियाणि ॥

( इन्द्रियस्थानस्यायमन्तिमोऽध्याय एवोपलब्धः )

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## षष्ठं चिकित्सितस्थानम् ।

........................................

........................................

### ज्वरचिकित्सिताध्यायः ।

अथातो ज्वरचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
प्रजापतिं समासीनमृषिभिः पुण्यकर्मभिः ।
पप्रच्छ विनयाद्विद्वान् कश्यपं वृद्धजीवकः ॥ ३ ॥
सूत्रस्थाने भगवता निर्दिष्टो द्विविधो ज्वरः ।
पुनरष्टविधः प्रोक्तो निदाने तत्त्वदर्शिना ॥ ४ ॥
तेषां ज्वराणां कतमो जातमात्रस्य जायते ।
पूर्वरूपं च रूपं च किञ्च तस्य चिकित्सितम् ॥ ५ ॥
इतरेषां ज्वराणां च पूर्वरूपं सलक्षणम् ।
चिकित्सितं च किं तेषामामजीर्णज्वरेषु च ॥ ६ ॥
क्षीरपस्य च किं पथ्यं, पथ्यं किंचान्नभोजिनः ।
क्षीरान्नभोजिनः किंच ज्वरितस्य शिशोर्हितम् ॥ ७ ॥
कां च वृत्तिं........................................

........................................

........................................

( इति ताडपत्रपुस्तके ९२ तमं पत्रम् । )



१ अस्याग्रे अष्टपत्रात्मको ग्रन्थः खण्डितस्ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

.....................................

.....................................

## गर्भिणीचिकित्सिताध्यायः ।

संयोज्य मधुना शीतं क्षीरं मधु-रसाधिक(त)म् ।
शर्करा मधु तैलं च यष्टीमधुकफाणितम् ॥
एते हि लेहिता घ्नन्ति तथैव परिकर्तिकाम् ।
फाणितं तिलकल्कं च शर्करा मधुकं तथा ॥
तण्डुलोदकसंयुक्तं सद्यो हन्ति प्रवाहिकाम् ।
काश्मर्यवृक्षत्वक्कल्कं श्यामामूलं तथैव च ॥
यवागूं दधिमण्डेन सिद्धामल्पघृतां पिबेत् ।
किराततिक्तकं लोध्रं यष्टीमधुकमेव च ॥
पातव्यं मधुसंयुक्तं सद्यो हन्ति प्रवाहिकाम् ।
वर्षाभूमूलनिष्क्राथं योजयेद्देवदारुणा ॥
तत् पिबेन्मधुसंयुक्तं शूना स्त्री मूर्वया सह ।
पिप्पल्यङ्कोठमूलानि वाजिलेण्डरसं तथा ॥
माहिषेणं पिबेद्दध्ना कामलायां चिकित्सितम् ।
मातुलुङ्गरसः पेयः सैन्धवेन सुयोजितः ॥
हृदि शूलस्य भैषज्यं श्रेष्ठमित्याह कश्यपः ।
पिप्पलीमूलकल्कस्तु पत्रं गन्धप्रियङ्गवः ॥
मातुलुङ्गरसश्चैव हृदि शूलस्य भेषजम् ।
प्रियङ्गवोऽथ पिप्पल्यो भद्रमुस्तं हरेणवः ॥
क्षौद्रं बदरचूर्णं च षडङ्गं हृदयौषधम् ॥
स्निग्धो मांसरसः पथ्यः सैन्धवेनावचूर्णितः ।
माहिषे षष्टिका वाऽपि स्यादम्ले त्वचि मारुते ॥
भद्रदारुहरीतक्यौ सैन्धवं कुष्ठमेव च ।
सफाणितं घृतं चैव लेह ऊर्ध्वानिलापहः ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पिप्पल्यो गैरिकं भार्गी हिङ्गु कर्कटकी तथा ।
समाक्षिको भवेल्लेहो हिक्काश्वासनिबर्हणः ॥
पिप्पली पिप्पलीमूलं मुस्ता नागरमेव च ।
दीपनीयं पिबेदेतं पयसा शर्करान्वितम् ।
नित्यं स्नाता च हृष्टा च शुक्लवस्त्रधरा शुचिः ॥
देवविप्रपरा सौम्या गर्भिणी पुत्रभागिनी ।
नैवोन्नता न प्रणता न गुरुं धारयेच्चिरम् ॥
उद्वेजनं तथा हास्यं संघातं चापि वर्जयेत् ।
इति ह स्माह भगवान् कश्यपः ॥

इति गर्भिणीचिकित्सितम् ॥

---

## दुष्प्रजाताचिकित्सिताध्यायः ।

अथातो दुष्प्रजाताचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
ये स्त्रीणां दुष्प्रजातानां व्याधयः संभवन्ति हि ।
नामतस्तान् प्रवक्ष्यामि तेषां चैव चिकित्सितम् ॥ ३ ॥
याः कृच्छ्रेण प्रजायन्ते प्रसूताश्चामयन्ति याः ।
स्नेहस्वेदैस्ततस्तासां क्षिप्रं वायुः प्रशाम्यति ॥ ४ ॥
यवागूं दीपनीयां तु स्मृतिमान् दातुमर्हति ।
यथा शेते सुखं नारी नीरुजा शयने सुखे ॥ ५ ॥
रात्रौ निर्गमनात्त्रासात् सहसोत्पतनादपि ।
ईर्ष्याशोकभयक्रोधान्नानावेगविधारणात् ॥ ६ ॥
एतैश्चान्यैश्च नारीणां व्याधयः संभवन्ति हि ।
सूतिकानां दिवास्वप्नादजीर्णाद्ध्यशनादपि ॥ ७ ॥
योनिपृष्ठकटीभेदशाखावायुरसृग्दरः ।
वाताष्ठीला च गुल्मश्च हृदि शूलं प्रवाहिका ॥ ८ ॥

---

१ रुग्णा भवन्तीत्यर्थः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पुरीषमूत्रसंरोध आध्मानं शूलमेव च ।
शूयते दुष्यते योनिर्योनिशूलं च दारुणम् ॥ ९ ॥

वेपथुश्छर्दनं मोहो मन्यास्तम्भो हनुग्रहः ।
ज्वरातिसारो वैसर्पो दद्रूपामाविचर्चिकाः ॥ १० ॥

किटिभान्यथ विस्फोटा गात्रे चार्धशिरोरुजा ।
हृद्रोगाश्चाक्षिरोगाश्च प्लीहा श्वयथुकामले ॥ ११ ॥

एते चान्ये च बहवो दुष्प्रजाताशरीरजाः ।
व्याधयः संप्रकुप्यन्ति चिकित्सितमतः परम् ॥ १२ ॥

द्वे पञ्चमूले भार्गी च मधुशिग्रुः शतावरी ।
उशीरं चन्दनं चैव श्वदंष्ट्रा मदयन्तिका ॥ १३ ॥

द्वे बले वसुकः पाठा पयस्या ह्यमृता तथा ।
वृषादनी सुगन्धा च तथा कार्या पुनर्नवा ॥ १४ ॥

मूर्वा गृध्रनखी मुस्ता मोरटस्तिल्वकस्तथा ।
इत्येतासां तु मूलानि यथालाभं समानयेत् ॥ १५ ॥

यवकोलकुलत्थानां त्रयः प्रस्थाः समास्ततः ।
एतान्यष्टगुणे तोये पाचयेद्भिषगुत्तमः ॥ १६ ॥

अष्टभागस्थितं तं तु परिपूतं निधापयेत् ।
तत्रावापमिदं दद्यान्मुष्टिकान्यौषधानि तु ॥ १७ ॥

पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ।
चव्यं द्वे रजनी चैव शृङ्गवेरं वचाऽभया ॥ १८ ॥

कुष्ठं रास्नाऽजमोदश्च विडङ्गं मरिचानि च ।
भद्रदारुरथैला च भार्गीकुटजतण्डुलाः ॥ १९ ॥

एतेषां कार्षिका भागा लवणानां पलं भवेत् ।
तैलप्रस्थं वसाप्रस्थं निष्क्वाथो द्विगुणो भवेत् ॥ २० ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

क्षीरप्रस्थो दधिप्रस्थो जलप्रस्थस्तथैव च ।
मातुलुङ्गाम्रपेशीनां रसप्रस्थार्धयोजितम् ॥ २१ ॥
शनैर्मृद्वग्निना सिद्धमथैनमवतारयेत् ।
अभ्यञ्जनेषु पानेषु बस्तिकर्मणि चोत्तमम् ॥ २२ ॥
ये तु वातसमुत्थानाः सूतिकानामुपद्रवाः ।
सर्वेषां शमनं श्रेष्ठमेतन्नैवृतमुत्तमम् ॥ २३ ॥
एतेषामेव सर्वेषां कल्कं निष्क्वाथ्य पाययेत् ।
यः कश्चित् सूतिकाव्याधिस्तं त्रिरात्रेण साधयेत् ॥ २४ ॥
द्वे पञ्चमूल्यौ भार्गी च रास्ना द्वे च पुनर्नवे ।
शिग्रुर्हंसपदी........................
..........................................
..........................................

(इति ताडपत्रपुस्तके १०१ तमं पत्रम् ।)

## बालग्रहचिकित्सिताध्यायः ।

...................................
......................श्चाभियाचनम् ।
ब्रह्मण्यभावात् क्रुद्धाऽपि प्राह सानुग्रहं वचः ।
एषां व्यतिक्रमाणां त्वं फलमाप्नुहि रेवति ! ॥
सर्वग्रहाणामेका त्वं तुल्यवीर्यबलद्युतिः ।
भविष्यसि दुराधर्षा देवानामपि पूजिता ॥

---

१ मूलताडपत्रपुस्तके एतत्पत्रप्रान्तस्य कीटदष्टतया शतस्थानीय एकोऽङ्को दृश्यते । लिपिरप्येतदीया पूर्वापरालोचने अत्रैव त्रुटितभागे पूरणे संवदति । पश्चात् खिलभागे अन्तर्वत्नीचिकित्सितस्योल्लेखेन तेन सह विषयसंगमनेऽपि तत्र पत्रत्रुटेरभावेन लिपिविसंवादेन पूर्वोक्तविषयस्य खिलभागे पूना रूपान्तरेण निरूपणस्य दर्शनेन, अत्र ग्रहपूतनाविषयात् पूर्वं गर्भिणीदुष्प्रजाताचिकित्सितप्रदर्शनस्यौचित्येन च १०१तमं किलैतत्पत्रमित्यत्र संनिवेशितम् । अस्याग्रे पत्रद्वयात्मको ग्रन्थः खण्डितस्ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

नामभिर्बहुभिश्चैव त्वां वक्ष्यन्ति जना भुवि ।
वारुणी रेवती ब्राह्मी कुमारी बहुपुत्रिका ॥
शुष्का षष्ठी च यमिका धरणी मुखमण्डिका ।
माता शीतवती कण्डूः पूतनाऽथ निरुञ्चिका ॥
रोदनी भूतमाता च लोकमातामहीति च ।
शरण्या पुण्यकीर्तिश्च नामानि तव विंशतिः ॥
ये च त्वां पूजयिष्यन्ति श्रद्दधाना जना भुवि ।
नैतेषां सर्वभूतेभ्यो भविष्यति भयं क्वचित् ।
सायं प्रातश्च नामानि यो जपेत्तव विंशतिम् ॥
शुचिर्नरः प्रजास्तस्य वर्धिष्यन्ति विपाप्मनः ।
तत उग्रेण तपसा स्कन्दमाराधयन् पुनः ।
तस्या मनीषितं ज्ञात्वा रेवतीमब्रवीद्गुहः ॥
भ्रातॄणां च चतुर्णां वै पञ्चमो नन्दिकेश्वरः ।
भ्राता, त्वं भगिनी षष्ठी लोके ख्याता भविष्यसि ॥
यथा मां पूजयिष्यन्ति तथा त्वां सर्वदेहिनः ।
अस्मत्तुल्यप्रभावा त्वं भ्रातृमध्यगता सदा ॥
षण्मुखी नित्यललिता वरदा कामरूपिणी ।
षष्ठी च ते तिथिः पूज्या पुण्या लोके भविष्यति ॥
इत्येवं भगिनी जज्ञे षष्ठी स्कन्दस्य धीमतः ।
तस्मात् सा सततं पूज्या सा हि मूलं सुखायुषोः ॥
तस्माच्च सूतिकाषष्ठीं पक्षषष्ठीं च पूजयेत् ।
उद्दिश्य षण्मुखीं षष्ठीं तथा लोकेषु नन्दति ॥
इत्येवं रेवती जज्ञे सुरासुरनमस्कृता ।
वृद्धजीवक ! कर्माणि शृणु तस्याः प्रधानतः ॥
ज्वरातिसारो वैसर्पः पीडनेन्द्रियदूषणम् ।
आनाहः शूलमरुचिर्मि···नं श्वासकासतृट् ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

निद्रानाशोऽतिनिद्रा च मुखपाको व्रणोद्भवः ।
एकाङ्गकः पक्षवधः क्षीरालसविसूचिकाः ॥
हिक्का मूर्च्छा मदो मोहो रोदनं स्तब्धनेत्रता ।
स्वरवर्णाग्निभेदश्च पाण्डुत्वं कामलाऽरतिः ॥
क्षीरदूषणनाशौ च शिरोरुग्घृदयद्रवः ।
नासाक्षिकर्णरोगाश्च त्रासकुञ्चनरोदनम् ॥
ये चान्ये चैव विविधा ये रोगा नानुकीर्तिताः ।
रेवतीरोषसंभूता भूयिष्ठं त उदाहृताः ॥
तस्मात् साधारणीं तस्याः क्रियां कुर्याद्विचक्षणः ॥
अतश्च रेवतीमेके ग्रहमेके वदन्त्यपि ।
अश्वगन्धाऽजशृङ्गी च सारिवे द्वे पुनर्नवे ॥
क्षुद्रा सहा विदारी च कषायः परिषेचने ।
पलङ्कषा सर्जरसः कुष्ठं गिरिकदम्बकः ॥
देवदारु समञ्जिष्ठं सुरा तैलं सुवर्चिका ।
नलदं तुम्बरु त्वक् च समभागानि कारयेत् ॥
एतेन गात्रमभ्यज्य ततः संपद्यते सुखी ।
अश्वकर्णस्य पुष्पाणि धातक्यास्तिन्दुकस्य च ॥
ककुभस्य च पुष्पाणि दाडिमस्य धवस्य च ।
त्वक्क्षीरी मधुकं चैव क्षीरेण सह पाचयेत् ॥
ततो मात्रां पिबेद्बालस्ततः संपद्यते सुखी ।
एतेष्वेव घृतं पक्वमतीसारमरोचकम् ॥
हन्ति तृष्णारुचिच्छर्दीः शर्करामधुसंयुतम् ।
उलूकगृध्ररोमाणि कटूलाबूस्तथाऽजटी ॥
यवाः श्वेता घृतं गव्यं पेयोऽयं रेवतीनुदे ।
वरुणारिष्टकौ चोभौ पुत्रञ्जीवकचि(त्र)कौ ॥
एतेषां तु त्वचं बालो माता धात्री च धारयेत् ।
उपद्रवाँश्च शमयेद्दृष्ट्वा स्वैः स्वैश्चिकित्सितैः ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

नक्षत्रे चास्य रेवत्यां पुष्टिकर्माणि कारयेत्।
अतश्चोर्ध्वं प्रवक्ष्यामि पूतनायाश्चिकित्सितम् ॥
यदुक्तं पूर्वभैषज्यं तच्च सर्वं प्रचारयेत्।
असुरो दुन्दुभिर्नाम सुरासुरभयङ्करः ॥
स्कन्दमायोधयन्मोहात् क्रुद्धं दृष्ट्वा च षण्मुखम्।
विवेश क्रौञ्चस्य गुहां मातुलस्य महागिरेः ॥
स्कन्दस्तं च महाशैलं मातुलं तं च दानवम्।
शक्त्या जघान युगपत्ततो गुहवधाद्गुहः ॥
आसीद्वर्णपरिभ्रष्टस्तं समेत्य सुरासुराः।
दिशः समुद्राः सरितो महाभूतानि तोयदाः ॥
पूत्यर्थं धूपयामासुस्ततः पूतोऽभवद्गुहः।
यस्मिन् देशे तु भगवान् पूतः स्कन्दो महाबलः ॥
संजज्ञे पूतना तस्मात् सर्वलोकभयङ्करी।
तामब्रवीद्गुहः पुण्यां पूतनामग्रतः स्थिताम् ॥
याहि त्वं भिन्नमर्यादा(न्)चेत्युक्ताऽऽह तथाऽस्त्विति।
मलजा पूतना कौञ्जी (क्रौञ्ची) वैश्वदेवी च पावनी ॥
पञ्चनामेति चाप्युक्ता शृणु तस्याश्चिकित्सितम्।
करञ्जशोभाञ्जनकावास्फोटा ह्यटरूषकः ॥
सप्तपर्णश्च निम्बश्च भार्गी च परिषेचनम्।
सुरासौवीरकाभ्यां च हरितालं मनःशिला ॥
कुष्ठं सर्जरसं चैव तैलमभ्यञ्जनं पचेत्।
पिप्पली पिप्पलीमूलं बृहती कण्टकारिका ॥
शालपर्णी पृश्निपर्णी मधूकं मधुकस्तथा।
एतं संभृत्य संभारं क्षीरे सर्पिर्विपाचयेत् ॥
छर्दिं हिक्कां च शमयेदेतत् सर्पिर्निषेवतः।
कुक्कुटस्य पुरीषं च केशाश्चर्म पुराणकम् ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

जीर्णां च भिक्षुसङ्घाटीं सर्पनिर्मोचनं घृतम् ।
धूपमेतं प्रयुञ्जीत सन्ध्याकाले सुखङ्करम् ॥
अनन्तां कुक्कुटीं बिम्बीमरिष्टामथ कर्कटीम् ।
सूत्रेण ग्रथिता एता धारयेत् पाणिपादयोः ॥

(इति ताडपत्रपुस्तके १०४ तमं पत्रम् ।)

यो यश्चाभिभवेद्व्याधिस्तं च तं च निवर्तयेत् ।
अक्षिरोगचिकित्साभिः शमयेदन्धपूतनाम् ॥
शीतज्वारचिकित्साभिः शमयेच्छीतपूतनाम् ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥
पचेद्घृतं पञ्चमूल्या सैन्धवेन च पण्डितः ।
दीपनीयमिति प्रोक्तं सर्पिरेतन्महात्मना ॥
सक्षौद्रशर्करं लेह्यं शमयेच्छीतपूतनाम् ।
रास्ना पुनर्नवा कुष्ठं तगरं देवदारु च ॥
पत्रागुरुहरेण्वश्च गुडूची त्रिफला सिता ।
दशमूलं च तैः सर्पिः पचेत् क्षीरे चतुर्गुणे ॥
विशुद्धं लेहयेद्बालं शाम्यते कटपूतना ।
बिल्वाङ्कोठौ कपित्थार्कौ कार्पासमटरूषकम् ॥
ऊरुपूगस्य पत्राणि वंशस्याश्मन्तकस्य च ।
प्रपौण्डरीकं मधुकं शतपुष्पा पुनर्नवा ॥
एतैस्तैलं घृतं वाऽथ पयसा योजितं पचेत् ।
एतेन गात्रमभ्यज्य सक्षारं पाययेदिदम् ॥
मृद्वीकां च पयस्यां च श्रीपर्णीं सारिवां तथा ।
मधूकं नागपुष्पं च शीतपाकीयुतं पिबेत् ॥

---

१ मूलताडपत्रपुस्तके अनयोः १०४।१०५ संख्यतया स्वीकृतयोः पत्रयोः प्रान्तस्य कीटदंशेन आदिमे शतस्थानीयः, द्वितीयेऽन्तिमः पञ्चाङ्को दृश्यते; लिपिरपि पूर्वापरालोचने एतद्भाग एव संवदति, पश्चाद्रेवतीप्रकरणसत्त्वेन तेन सहास्य विषयसंगमनेऽपि तत्र पत्रत्रुटेरभावेन लिपिविसंवादेन च अत्र ९२–११४ योरन्तरा त्रुटितभागे १०४।१०५ संख्यत्वेन निर्धार्य समावेशः कृतः ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

शर्करामधुसंयुक्तं तदा संपद्यते सुखी ।
अथास्य धूपनं दद्यात् सायं प्रातरतन्द्रितः ॥
गोलोम सर्पनिर्मोकं वचां सिद्धार्थकाँस्तथा ।
संसृज्य सर्पिषा तेन धूपयेत् सन्ध्ययोर्भिषक् ।
इत्यन्धपूतनायास्तु बिल्वाङ्कोठादि भेषजम् ॥
जातमात्रं पुरा स्कन्दमुमाशङ्करसन्निधौ ।
गन्धालङ्कारपुष्पाद्यैर्मण्डयामास षण्मुखम् ॥
इषुकं चित्रकं चास्य ललाटचक्षुषि( व्यधात् ) ।
नासिकागण्डचिबुकवक्त्रे चित्रविशेषकान् ॥
गन्धर्वाप्सरसश्चैनं रमयन्ति गणास्तथा ।
ततोऽब्रवीद्बालभावान्मातरं भगवान् गुहः ॥
एतमेव महादेवजटाभारं विभूषणम् ।
देहीति न च लेभे तं पुनः पुनरपि ध्रुवम् ॥
गुहस्त्वलभमानस्तं रुषितो ललितः सदा ।
अपविद्ध्य क्षितौ सर्वं निर्मृज्य मुखमण्डलम् ॥
ततः क्षुब्धास्त्रयो लोका नष्टज्ञाना विचेतसः ।
दम्पती चापि संविग्नौ ददतुश्चामृतोद्भवम् ॥
ततः प्रभृति सप्तानां चन्द्रः शिरसि दृश्यते ।
रुद्रस्कन्दादिनन्दीनां रेवत्याश्च महात्मनः ॥
अपविद्धं तु यत् क्रोधात् स्कन्देन मुखमण्डलम् ।
ततो ग्रहः सा बभूव दारुणा मुखमण्डिका ॥
निर्दहिष्यन्निव क्रोधात्ततस्तामब्रवीद्गुहः ।
अन्नं कुरु महाभागे सङ्कीर्णाकारकर्मणाम् ॥
तथाऽस्त्विति च सा प्राह स्कन्दस्य परिचारिका ।
एवं मुखार्चि(का) जज्ञे शृणु तस्याश्चिकित्सितम् ॥
कपित्थबिल्वतर्कारीबिम्बीगन्धर्वहस्तकाः ।
तैलमेतैस्तु संयुक्तं हितमभ्यञ्जनं शिशोः ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

खुड्डाकं पञ्चमूलं च श्योनाकोऽथ मधूलिका ।
मधूकानि त्वचः क्षीरी पिप्पल्यस्तैर्घृतं पचेत् ॥
गव्यं क्षीरं गवां पक्वं शर्करामधुसंयुतम् ।
पिबेत् कोलमितं बालस्ततः संपद्यते सुखी ॥
कुष्ठं सर्जरसं चैव यवाः सर्पिश्च धूपनम् ।
सर्पवीरल्लचाषाणां जिह्वानां धारणं मणेः ॥
जीर्णे भोजनमप्यस्य ततः शस्तं प्रदापयेत् ।
अतश्चोर्ध्वं प्रवक्ष्यामि शीतपूतनयाऽर्दिते ॥
नादेयी सुरसा बिम्बी कपित्थं जीवकस्तथा ।
नदीभल्लातकं श्यामा बिल्वं शीतशिवं तथा ॥
एतं (भिः) कषायं निष्क्वाथ्य परिषिञ्चेत् सुखाम्बुना ।
एतेन परिषिक्तस्य तैलमभ्यञ्जनं शृणु ॥
गोमूत्रं बस्तमूत्रं च मुस्तकं देवदारु च ।
कुष्ठं च सर्वगन्धाश्च तैलमभ्यञ्जनं पचेत् ॥
खदिरं रोहिणीसारं पलाशं ककुभत्वचम् ।
एतं संभृत्य संभारं क्षीरे सर्पिर्विपाचयेत् ॥
तत् सिद्धं लेहयेत् काले शर्कराक्षौद्रमात्रया ।
शीतपूतनया ग्रस्तो मुच्यते पथ्यभोजनः ॥
गृध्रोलूकतरक्षूणां पुरीषाणि समानयेत् ।
अग्निको बस्तलोमानि पिचुमन्दश्च धूपनम् ॥
शीतपूतनया ग्रस्ते तच्चेदं च चिकित्सितम् ।
अत ऊर्ध्वं तु सर्वेषां शृणु सामान्यभेषजम् ॥
अग्निमन्थः कुरबको वरुणः पारिभद्रकः ।
निशाऽनलः पोटगलः पूतिका रोहिषस्तथा ॥
एतेन परिषिक्तस्य तैलमभ्यञ्जनं शृणु ।
प्रियङ्गु रोचना चैव शतपुष्पा कुटन्नटम् ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

तालीसपत्रं नलदं तथा चन्दनसारिवे ।
मधूकाङ्कोठमञ्जिष्ठापृथ्वीकाभूतिकानि च ॥
एतैस्तैलं समं सिद्धं मुद्गाम्लोदकसंयुतम् ।
एतेन बालमभ्यक्तं मुञ्चत्याशु पितृग्रहः ॥
बिम्बीकाश्मर्यमधुकं कुलत्था बदरा यवाः ।
खुड्डाकपञ्चमूलस्य निष्काथं चात्र दापयेत् ॥
खर्जूरं मुस्तकं चैव नारिकेलफलानि च ।
नालिकाङ्कुरमृद्वीका मधूकं मधुकं तथा ॥
एतानि शुष्कचूर्णानि........................
.........................................
.........................................

(इति ताडपत्रपुस्तके १०५ तमं पत्रम् ।)

## ह्लीहह्लीमकचिकित्सिताध्यायः ।

.........................................
.........................................
.....................दोऽग्निबलसंक्षयः ।
मूर्च्छा तृष्णा भ्रमस्तन्द्री विषादारुचिगौरवम् ॥
तस्य प्रतिक्रियां कुर्याद्वातपित्तहरीं बुधः ।
गुडूचीस्वरसे सिद्धं सक्षीरं माहिषं घृतम् ॥
उपस्निग्धं ततस्तं तु स्रंसयेद्बलकालवित् ।
रसेनामलकानां तु त्रिवृद्युक्तेन युक्तितः ॥
मधुराण्यविदाहीनि विरिक्तं नित्यमाशयेत् ।
दुर्बलस्य प्रयोज्या तु नित्यं गुडहरीतकी ॥
रक्तपित्तौषधं यच्च तच्चाप्यत्र प्रशस्यते ।
धात्रीफलानां पक्वानां स्वरसस्याढकं भवेत् ॥

१ अस्याग्रे अष्टपत्रात्मको ग्रन्थः खण्डितस्ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पिप्पल्यो मधुकं द्राक्षा चन्दनोशीरबालकम् ।
घृतप्रस्थं पचेदेतैः पक्के दद्याच्च शर्कराम् ॥
तल्लिहेन्मधुना प्रातः पथ्याशी नीरुजो भवेत् ।
एतत् पित्तोत्तरे कार्यं, शृणु वातोत्तरेऽपि तु ॥
कल्याणकं[1] बलातैलं कौमारं वा प्रयोजयेत् ।
कामलापाण्डुशोथानां तुल्यं कुर्याच्च भेषजम् ॥
पथ्याशिना च सततं सेव्याऽगस्त्यहरीतकी ।
इति ह स्माह भगवान् कश्यपः ॥

(इति) प्लीहाहलीमकचिकित्सितम् ।

---

## उदावर्तचिकित्सिताध्यायः ।

अथात उदावर्तचिकित्सितमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥

कषायकटुतिक्तरूक्षशीतपूतिशुष्कशाकवल्लूरपिण्याकसुनिषण्णकदुग्धिकाकोद्रवश्यामाकनीवारयवककट्ट(?)वेत्राग्रकर्कन्धूकपित्थबिल्वकरीरगाङ्गेरुकीलिकुचपारावतभव्यकाञ्जिकशुक्तारनालतुषोदकमुद्गकलायातसीप्रभृतिनिषेवणाद्रूक्षात्मनो वातभूयिष्ठप्रकृतेर्वेगविधारणादनिलः प्रकुपितो देहमूर्ध्वमुदावृत्य वायुनोदानेन प्रत्याहतो गुदमासाद्याशयं कृत्वाऽधोवहानि स्रोतांसि दूषयित्वा विण्मूत्रकफपित्तानिलशुक्रमार्गानुपरुणद्धि, तत आनाहमुपजनयति प्राणहरं, तल्लक्षणं वा। क्षीरमुपसेवमानस्य शिशोरचिरं वा कटीधारणाद्बस्तिगुदसंरोधनादतिरोदनात् प्रजागरादस्नेहात्क्षीरानुपसेवनाद्वेगविधारिण्या उपवासप्रमिताशनविषमाशनप्रजागरचित्तेर्ष्याव्यायामनित्यायाः क्षीरमामोद्यते वायुना; तत् पीयमानमुदावर्ताय संपद्यते । तत्र षडुदावर्ताः । वातविण्मूत्रशुक्रच्छर्दिक्षवथूनां संधारणादप्रवृत्तेश्च षण्णां षडुच्यन्ते। तदुदावर्तसामान्यात्तु तमेकमेवाहुरेके । तेषां नवेगान्धारणीयेऽध्याये लक्षणान्यौषधानि चोक्तानि। तानीहापि तु दारुणत्वादस्य व्याधेर्यत्किञ्चिदुपदेक्ष्यामः। शूलमूर्च्छादाहानाहाध्मानानि, प्रवृत्तिद्वेषो, वैवर्ण्यं, संज्ञानाशस्खलनपतन-

---

१ कुमारकल्याणघृतमित्यर्थः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

विलपनतृष्णाहिक्काश्वासप्रस्वेदाऽङ्गारपरिकर्तिकाभिरभीक्ष्णं बाध्यते, बस्तिगुदहृदयपार्श्ववंक्षणोदरशूलमूरुसादो व्यथा चेत्युदावर्तलक्षणानि । पञ्चादौ पूर्वरूपाणि भवन्ति ॥ ३ ॥

पञ्चजनमादावुष्णलवणतैलाभ्यक्तं यथायोगं स्विन्नशरीरं फलवर्तिभिरुपक्रमेत् । विस्रंसितं च संतमुष्णस्निग्धमधुरलवणप्रायमशनं यवगोधूमषष्टिकशाकघृतप्रायमानूपौदकमांसप्रायं वाऽऽहारमनुपद्रवाय बलिने उपकल्पयेत् । कोशातकीकट्वलाबुबीजपिप्पलीसैन्धवहिङ्गुवचाहरितालमनःशिलामाषचूर्णैर्गोमूत्रपिष्टैः फलवर्त्य उपवाता(कृता) घृताक्ते कटुतैलाक्ते वा गुदे शलाकया प्रणयेत् । पूर्ववदेव चोपचारः । म्रक्षणाच्छादनपरिषेकाशनानि तानि चास्य स्निग्धोष्णानि विदध्यात् । सक्तुवाट्यकुल्माषापूपवास्तुकयवशाकसुधापत्रत्रिवृच्छाकपञ्चाङ्गुलश्रीवारिकाश्रीफलासुवर्चलाकाकमाचीकलायपालङ्क्यादिभिश्च शाकैर्घृतसिद्धैर्भोजयेद्यवान्नम् । त्रिवृत्पीलुयवोत्कारान् वा गोमूत्रेण पाययेत् । त्रिवृद्धरीतकीश्यामासुधाः क्षीरेण युक्ता मूत्रैर्वाऽऽनाहभेदनम् । त्रिफलादन्तीश्यामात्रिवृत्कम्पिल्लकपीलुस्वर्णक्षीरीवचासप्तलानीलिकाग्रहघ्नीचूर्णानि सुधाक्षीरेण गुटिका आमलकमात्रीः कृत्वा तत एकां भक्षयित्वोष्णोदकमूत्रानुपानादानाहैर्मुच्यते । एतान्येव त्रिफलादीनि क्षीरमूत्रवर्जितानि पञ्चकटुकपञ्चलवणहिङ्गुकुष्ठक्षारद्वयशतपुष्पापाठाश्रीफलयुतानि चूर्णानि कृत्वा बिडालपदकं क्षीरमद्योष्णवारिगोमूत्रान्यतमपीतमानाहशूलगुल्मभगन्दरार्शसां निर्णाशनं चूर्णं, नाराचकमित्युच्यते तत् ॥ ४ ॥

तत्र श्लोकाः—

यदि व्यतिक्रमेदेतानुदावर्त उपक्रमान् ।
युक्तोष्णलवणं तस्य निरूहमुपकल्पयेत् ॥ ५ ॥
आस्थापनं च..........................
...................................
...................................

(इति ताडपत्रपुस्तके ११४ तमं पत्रम्[1])

---

१ अस्माग्रे पत्रद्वयात्मको ग्रन्थस्त्रुटितस्ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## राजयक्ष्मचिकित्सिताध्यायः ।

................................

................................

...............(रोगा)नीकविनाशनम् ।
पिप्पल्यो विंशतिः श्रेष्ठा उदकार्धाढके शृताः ॥
चतुर्भागावशेषं तं छागक्षीरेण तावता ।
शृतं नित्यं पिबेच्छोषी तेनैवाश्नीत नित्यदा[1] ॥
विना वाऽन्नोदकं शक्त्या तत्प्रधानो विमुच्यते ।
द्वादशाब्दानतीतो वा स्निग्धस्विन्नो विशोधितः ॥
पिबेत् क्षीरेण पिप्पल्यः(लीः) पञ्च पञ्च च वर्धयेत् ।
शतं तथैव ह्रसयेद्भोजनोदकवर्जितः ॥
पिप्पलीवर्धमानं तु सर्वरोगविनाशनम् ।
पिप्पलीनां शतं वाऽपि शृतं तोयाढके सदा ॥
पादशिष्टं समक्षीरं श्रपयेत् पुनरेव तत् ।
कफाधिके तु सक्षौद्रं, सघृतं पवनाधिके ॥
पित्तोत्तरे शर्करया सेवमानः सुखी भवेत् ।
पिप्पलीवर्धमानं तु वातश्लेष्मोत्तरे हितम् ॥
सर्वत्र पिप्पलीक्षीरं हितं कालादिदर्शनात् ।
शरन्मुखे नागबलामूलान्युद्धृत्य शोषयेत् ॥
सन्निधाय नवे भाण्डे ब्रह्मचारी जितेन्द्रियः ।
स्त्रीशूद्रवर्जी विजने चूर्णं क्षीरेण पाययेत् ॥
प्रथमे दिवसे कर्षं ततश्चोर्ध्वं विवर्धयेत् ।
ततः पलं पलं नित्यं पाययेत् पयसा शुचिः ॥
जीर्णे तस्मिन् पिबेत् क्षीरं भक्तोदकविवर्जितः ।
मासात् सोपद्रवं शोषं हन्ति नागबला नृणाम् ॥

---

१ सर्वदा इत्यभिसन्धिः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

प्रजामायुर्बलं मेधां प्रयताय ददात्यपि ।
षण्मासेन श्रुतधरः सर्वरोगविवर्जितः ॥
अशीतिकोऽपि च युवा भवेत् संवत्सरान्नरः ।
मण्डूकपर्ण्याः शुण्ठ्याश्च ब्राह्म्याश्च मधुकस्य च ॥
तद्गुणः सर्वरोगघ्नो विधिर्नागबलासमः ।
उद्वर्तितस्त्वजालेण्डैरजामूत्राभिषेचितः ॥
अजाक्षीरं पिबेन्नान्यदजाभिश्च वसेत् सह ।
अधस्तादवटेऽजानां वसञ्छोषी विमुच्यते ॥
आजं रसायनं ह्येतत् क्षयघ्नं बलवर्धनम् ।
हरीतकीनां श्रेष्ठानां द्वे शते जर्जरीकृते ॥
दशमूलसुधादन्तीकरञ्जाधोगुडासनाः ।
मयूरकं देवदारु निचुलं कुटजाटजी(?) ॥
कटङ्कटेरी बृहती रास्ना श्योनाकचित्रकौ ।
वरुणं चेति संकुट्य पञ्चविंशतिकैः पलैः ॥
षड्द्रोणेऽपां पचेदेतद्यावत् पञ्चाढकं स्थितम् ।
तस्मिन् पूते गुडतुलां दत्त्वा भूयश्च साधयेत् ॥
परिवृत्तं समालक्ष्य घृतभाण्डे निधापयेत् ।
मरिचानि विडङ्गानि भार्गीं शक्रयवांस्तथा ॥
आवपेत् कुटबीजानि पिप्पलीप्रस्थमेव च ।
मधुप्रस्थं च संसृज्य मासादूर्ध्वं प्रयोजयेत् ॥
पथ्याशी मात्रया काले मुच्यते कफजैर्गदैः ।
महाभयारिष्ट इति कश्यपेन प्रकल्पितः ॥
अपामार्गोऽश्वगन्धा च नाकुली गौरसर्षपाः ।
तिला बिल्वं च कल्कः स्यात् क्षयेषूद्वर्तनं हितम् ।
लशुनानां पलशतं निस्तुषं जर्जरीकृतम् ।
जलद्रोणेषु दशसु श्रपयेत् पादशेषितम् ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

घृताढकद्वयं तत्र विपचेज्जीवनैः सह ।
आजस्य पयसो द्रोणं क्वाथं च दशमूलिकम् ॥
आवपेत्तद्धृतं गोप्यं प्रयोज्यं मासतः परम् ।
इन्द्राणीघृतमित्येतद्राजयक्ष्मविनाशनम् ॥
वन्ध्याषण्ढकवृद्धानां कामदं पथ्यभोजिनाम् ॥
लशुनं वाऽपि कल्पेन यथोक्तेनोपचारयेत् ।
घृतस्यार्धाढके गव्ये जर्जरं लशुनाढकम् ॥
घृतभाण्डे समावाप्य वर्षं धान्येषु गोपयेत् ।
षण्मासमष्टमासं वा चतुर्मासमथो ततः ॥
पेयं नागबलावच्च सर्वरोगैर्विमुच्यते ।
इन्द्राणीघृतकल्पेन द्राक्षासर्पिर्विपाचयेत् ॥
तथा पीलुघृतं चैव सर्वरोगैर्विमुच्यते ।
इष्टयो रोहिणीस्नानं तयोर्मङ्गलसेवनम् ॥
रुद्रपूजा धृतिः शौचं ब्रह्मचर्यं च शान्तये ।
षडेकादश चोक्तानि यानि रूपाणि यक्ष्मिणः ॥
त एवोपद्रवास्तेषामशान्तौ स्वं चिकित्सितम् ।
इति ह स्माह भगवान् कश्यपः ॥
(इति) चिकित्सितेषु राजयक्ष्मचिकित्सितम् ॥
(इति ताडपत्रपुस्तके ११७ तमं पत्रम् ।)

---

## गुल्मचिकित्सिताध्यायः ।

अथातो गुल्मिनां चिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
वातादिसर्वरक्तोत्थाः कुक्षिहृत्पार्श्वबस्तिजाः ।
पञ्च पञ्चापदामग्र्या गुल्माः सूत्रे निदर्शिताः ॥ ३ ॥
चेष्टान्नपानसामान्या दोषाः प्रकुपिता नृणाम् ।
आमाशयमधिष्ठाय ततो गुल्मान् प्रकुर्वते ॥ ४ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

वातलेष्वन्नपानेषु वातलो यः प्रसज्जति ।
धावति प्लवतेऽधीते भृशं गायति नृत्यति ॥ ५ ॥
शीतवाताम्बुसेवी च शीतरूक्षकटुप्रियः ।
व्याधिक्लिष्टः कृशो रूक्षः सेवते तीक्ष्णमौषधम् ॥ ६ ॥
उदीरयति च्छर्दिं च बलाच्छर्दयतेऽपि वा ।
निरुणद्धि च वातादीन् तृप्तः पिबति वा बहु ॥ ७ ॥
शीघ्रयानेन वा याति व्यवायं वाऽतिसेवते ।
व्यायामाध्ययनस्त्रीषु बालो रूक्षश्च यो रतः ॥ ८ ॥
एतैश्चान्यैश्च कुपितो मारुतो दोषसंचयम् ।
करोति यत्र तत्रास्य स्थाने गुल्मो निचीयते ॥ ९ ॥
अग्निनाशोऽरुचिः शूलं च्छर्द्युद्गारान्त्रकूजनम् ।
पुरीषवर्तनं कार्श्यं गुल्मानां पूर्वलक्षणम् ॥ १० ॥
शूलं मूर्च्छा ज्वरस्तोदः कार्श्यं तृ(कृ)ष्णाऽरुणात्म(भ)ता ।
पार्श्वांसाक्षकशूलं च वातगुल्मस्य लक्षणम् ॥ ११ ॥
ऊषायणं ज्वरो दाहस्तृष्णाविड्भेदपीतताः ।
पित्तगुल्मे विजानीयात् पित्तलान्नोष्णसेविनः ॥ १२ ॥
रोमहर्षौ ज्वरश्छर्दिररुचिर्हृदयग्रहः ।
मूत्राक्षिनखविट्शौक्ल्यं शैत्यं च कफगुल्मिनः ॥ १३ ॥
सर्वाण्येतानि रूपाणि लक्ष्यन्ते सान्निपातिके ।
रक्तगुल्मः स्त्रिया योनौ जायते न नृणां क्वचित् ॥ १४ ॥
दुष्प्रजाता(ऽऽम)गर्भा च गर्भस्रूर्बहुमैथुना ।
अन्वक्षगर्भकामा च बहुशीतार्तवा च या ॥ १५ ॥
उदावर्तनशीला च वातलान्ननिषेविणी ।
या स्त्री तस्याः प्रकुपितो वातो योनिं प्रपद्यते ॥ १६ ॥
निरुणद्ध्यार्तवं तत्र मासिकं संचिनोति च ।
रक्ते च संस्थिते नारी गर्भिण्यस्मीति मन्यते ॥ १७ ॥

---

१ 'अन्वगन्वक्षमनुगेऽनुपदम्' इत्यमरः । अतिशीघ्रमिति यावत् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

स्तनमण्डलकृष्णत्वं रोमराजिः सदोहदा।
गर्भिणीरूपमव्यक्तं भजते सर्वमेव तु ॥ १८ ॥
वि(अ)पाकपाण्डुकार्श्यानि भवन्त्यभ्यधिकानि तु।
इत्येवंलक्षणं स्त्रीणां रक्तगुल्मं प्रचक्षते ॥ १९ ॥
अनेकदोषसंघातो गुल्मवद्गुल्म उच्यते।
त्रिदोषजादृते गुल्माः सिद्ध्यन्ति न चिरोत्थिताः।
गुल्मिनं प्रथमं वैद्यः स्नेहस्वेदोपपादितम् ॥ २० ॥
यथास्वदोषशमनैरौषधैः समुपक्रमेत्।
बृंहणं चातिगुल्मेषु भृशं चातिविरूक्षणम् ॥ २१ ॥
अतिसंशोधनं चैव गुल्मिनां न प्रशस्यते।
अभया पिप्पली व्योषं यावशूकोऽथ चित्रकः ॥ २२ ॥
सौवर्चलं विडङ्गानि वचा चेत्यक्षसंमिताः।
सम्यक्पक्वं घृतप्रस्थं तत् पिबेच्च यथाबलम् ॥ २३ ॥
घृतं दशाङ्गमित्येतद्वातगुल्मनिवारणम्।
सैन्धवं यावशूकश्च पिप्पली हस्तिपिप्पली ॥ २४ ॥
शुण्ठी चित्रक इत्येषां षड्भागाः पलिकाः पृथक्।
तुल्यक्षीरं घृतं प्रस्थं पक्वं षट्पलमुच्यते ॥ २५ ॥
षट्पलं सर्वगुल्मेषु वैद्याः प्राहुर्यथाऽमृतम्।
अभया पिप्पली द्राक्षा गुडूची सपुनर्नवा ॥ २६ ॥
लवणक्षारगन्धर्वभार्गीरास्नारसाञ्जनम्।
तुल्यक्षीरं पचेदेतैर्घृतमक्षसमैर्भिषक् ॥ २७ ॥
शैशुकं नाम तत् सर्पिर्वातगुल्मनिवारणम्।
स्निग्धस्विन्नसमाश्वस्तं गुल्मिनं स्रंसयेत्ततः ॥ २८ ॥
विरेचनेन मृदुना तैलेनैरण्डजेन वा।
विरिक्तं च यथाकालं नातिरूक्षाणि भोजयेत् ॥ २९ ॥

---

१ एवंप्राय एव विषयश्चरके निदानस्थाने तृतीयाध्याये मुद्रितभेडसंहितायां चिकित्सास्थानस्य पञ्चमाध्याये (गुल्मचिकित्सायां) च प्रपञ्चितः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

युक्ताम्ललवणोष्णानि युक्तस्नेहरसानि च ।
भोजयेद्गुल्मिनं नित्यं निदानगुरुवर्जकम् ॥ ३० ॥
न चातिभोजनं नित्यं शस्यते सर्वगुल्मिनाम् ।
पिप्पलीं पिप्पलीमूलं चव्यं चित्रकनागरम् ॥ ३१ ॥
बिल्वं कपित्थं बदरं वृषकं गणिकारिकाम् ।
हिङ्गुदाडिमजीवन्तीवृक्षाम्लं साम्लवेतसम् ॥ ३२ ॥
पौष्करं शटिदन्त्यौ च लवणानि च सर्वशः ।
द्वौ क्षारावजमोदं च तुल्यं शुष्काणि चूर्णयेत् ॥ ३३ ॥
मातुलुङ्गरसेनैते वटका बदरोपमाः ।
कृताः सुखाम्बुना पेया मद्यैरम्लेन वा भिषक्! ॥ ३४ ॥
वातगुल्मसुदावर्तं प्लीहशूलं च नाशयेत् ।
मयूरांस्तित्तिरीन् क्रौञ्चान् कपोतान् वनकुक्कुटान् ॥ ३५ ॥
यवगोधूमशालींश्च वातगुल्मी सदाऽश्नि(श्नी)यात् ।
यदि तु स्निह्यमानस्य वातगुल्मो न शाम्यति ॥ ३६ ॥
हितमास्थापनं तस्य तथैवाप्यनुवासनम् ।
क्षीरानुपानामभयां सगुडां संप्रयोजयेत् ॥ ३७ ॥
गुल्मिनां बद्धवर्चानां.................... ।
.......................................................
.......................................................

(इति ताडपत्रपुस्तके ११८ तमं पत्रम्[1] ।)

---

## कुष्ठचिकित्सिताऽध्यायः ।

.......................................................
.......................................................

स्वेदो वाऽतिखरत्वमङ्गानामतिश्लक्ष्णता वा वैवर्ण्यं रौक्ष्यं लोमहर्षः पिपासा

---

१ अस्याग्रे पत्रमेकं खण्डितं ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

गौरवं रागो दौर्बल्यं वेपथुः पिडकारुषां संभवश्चातिवेदना च क्षतविसर्पणमिति ॥

तत ऊर्ध्वमक्रियावतां कुष्ठानि जायन्ते। तत्र, श्यावारुणशूलकण्डूचिमिचिमखरत्वपारुष्यसंस्तम्भायामैर्वातोत्तराणि विद्यात्; दाहवेदनाज्वरविड्भेदोषायनपाकस्रावकोठानिकर्णा(?)क्षिप्रोत्थानैः शीतमधुरकषायसर्पिरनुशयैश्च पित्तोत्तराणि विद्यात्; श्वेतपाण्डुघनोत्सेधगुरुस्तैमित्यस्तम्भमहापरिग्रहाग्निसादैः शीतादितरानुशयैः कफोत्तराणि विद्यात्; व्याविद्धरूपबहुस्फुटितपरिस्रावकृमिदाहरुजोपेतशरीरावयवपातनमशुचिविगन्धिशोथबहुलमनेकोपद्रवं सान्निपातिकं रक्तत्वात् काकणमित्युच्यते। द्विदोषजानीतराणि; तान्यनुव्याख्यास्यामः—वातोत्तरे कपालकुष्ठं, पित्तोत्तरे त्वौदुम्बरं, कफोत्तरे मण्डलकुष्ठं, वातपैत्तिकमृष्यजिह्वं, पित्तश्लैष्मिकं पौण्डरीकं सिध्मं च, इति समासलक्षणम्। विस्तरतस्त्वष्टादश कुष्ठानि; तान्यनुव्याख्यास्यामः—सिध्मं च विचर्चिका च पामा च दद्रुश्च किटिभं च कपालं च स्थूलारुष्कं च मण्डलकुष्ठं च विषजं चेति नव साध्यानि; पौण्डरीकं च श्वित्रं च ऋष्यजिह्वं च शतारुष्कं चौदुम्बरं च काकणं च चर्मदलं चैककुष्ठं च विपादिका चेति नवासाध्यानि। सर्वं तु कुष्ठं त्वङ्मांसरुधिरलसीकाश्रयं स्पर्शघ्नं चेति; वर्धमानं च वैरूप्यकरं भवति। तत्तु(त्र) रजोध्वस्तमलाबुवारणपुष्पीपुष्पसदृशं सिध्मं; श्यामलोहितव्रणवेदनास्रावपाकवती विचर्चिका; कण्डूतोदपाकस्रावारुष्मती पामा; रौक्ष्यकण्डूदाहस्राववन्ति मण्डलानि वृद्धिमन्ति दद्रुः; कृष्णश्यावारुणखरपरुषस्राववृद्धिमन्ति गुरूणि प्रशान्तानि च पुनः पुनरुत्पद्यन्ते किटिभानि; कृष्णखरपरुषमलिनमनेकसंस्थानमण्डलं कण्डूलमृतुसन्धिषूष्णे चातिबाधते कपालाकृति कपालं; पिच्छास्राववेदनादाहकण्डूतोदज्वरवैसर्पमहाव्रणपरिग्रहं मृदुखरनिभं महारुष्कं; मण्डलैर्बन्धुजीवकुसुमोपमैर्दाहकण्डूवेदनास्राववद्भिर्मण्डलकुष्ठं; लूताकीटपतङ्गसर्पदशनदष्टमुपेक्षितं व्यभिचारेण खरीभवति कृच्छ्रसाध्यं विषजं; महाशयसमुत्सेधं जातं चिराद्भेदि पुण्डरीकपलाशवर्णं पौण्डरीकं; श्वेतभावाच्छ्वित्रं पञ्चविधमुत्तरत्रोपदेक्ष्यामः; ऋष्यजिह्वोपमं पारुष्यवैवर्ण्यगौरवर्णविक्लेदैर्ऋष्यजिह्वं;

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

नीललोहितपीतासितैरनेकैररुङ्भिः खरैः स्राविभिरुपद्रुतं शतारुष्कं; पक्कोदुम्बरफलसदृशमस्रावि जडमनेकमौदुम्बरं व्याख्यातं; काकणं हस्तिचर्मसदृशं खरं; वृद्धिमच्चर्मदलं; वैसर्पोद्भवं नित्यविसर्पि स्राववेदनाक्रिमिमदेककुष्ठं; पाणिपादाङ्गुष्ठौष्ठजङ्घादण्डदेशेषु स्फुटितस्राविवेदनावतीमविपाकिनीं विपादिकां विद्यात् । सर्वरोगाश्चैव मोहादुपेक्ष्यमाणा असाध्यतां यान्ति, असाध्यास्त्वाशु नृणां घ्नन्ति; तस्मादात्महितायाशु प्रयतेत ।

कुष्ठेष्वादौ वातोत्तरेषु घृताच्छपानमनेकशो मण्डान्तरितं प्रशस्यते, तिक्तसर्पिष इतरोत्तरयोः, वमनविरेचनास्था(पन)०.................

........................................................................

........................................................................

( इति ताडपत्रपुस्तके १२० तमं पत्रम्[1] )

## मूत्रकृच्छ्रचिकित्सिताध्यायः ।

....................................

....................................

कटीस्कन्धातिधरणात् पित्तं क्रुद्धं कफानिलौ ।
अनुसृत्य यदा बस्तिं दूषयन्ति तदाश्रयाः ॥
मूत्रकृच्छ्रं तदा जन्तोर्दारुणं संप्रवर्तते ।
सफेनमल्पमरुणं कालं वा शूलसंततम् ॥
मूत्रमानद्धवर्चस्त्वं वाताघातस्य लक्षणम् ।
सदाहवेदनं पीतमत्युष्णं बाष्पसंहितम् ॥
स्विद्यमानमुखो मूत्रं कुरुते पैत्तिके शिशुः ।
बहुलं कुरुते मूत्रमल्पबाधं सितं घनम् ॥
बस्तिगौरवशोथौ च मूत्राघाते कफात्मके ।
द्वन्द्वजं द्वन्द्वरूपेभ्यः सर्वेभ्यः सान्निपातिकम् ॥
रक्तजं पित्तवज्ज्ञेयं सरक्तस्य च मूत्रणात् ।

१ अस्याग्रे पत्रचतुष्टयात्मको ग्रन्थस्त्रुटितस्ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

विशेषाः सन्निपातोत्थे मूर्च्छाभ्रमविलापकाः ॥
सर्वेषु कार्श्यमरतिररुचिः सानवस्थितिः ।
तृष्णाशूलविषादार्तिस्त एव स्युरुपद्रवाः ॥
चिरात् प्रमेहाः कुप्यन्ति सद्यः कृच्छ्राणि देहिनाम् ।
विशेषः कृच्छ्रमेहानां कृच्छ्रे दाहोऽति चेन्द्रिये ॥
कृच्छ्राण्याशु निवर्तन्ते प्रमेहास्तु प्रसङ्गिनः ।
पित्तप्रायाणि कृच्छ्राणि वातस्थानाश्रयाणि च ॥
तस्मात् सामान्ययोगेन चिकित्सा ह्युपदेक्ष्यते ।
शरमूलानि निष्क्वाथ्य शीतं पूतं च तज्जलम् ॥
शर्करामधुसंयुक्तं पिबेत् कृच्छ्रोपशान्तये ।
मधुकं शरमूलं च त्रिफला सितवारिका ॥
शृतं सशर्कराक्षौद्रं मूत्रकृच्छ्रनिवारणम् ।
तार्णस्य पञ्चमूलस्य रसं निष्क्वाथ्य पाययेत् ॥
शर्कराक्षौद्रसंयुक्तं सर्वकृच्छ्रनिवारणम् ।
शतावरी पृथक्पर्णी कुलत्थबदराणि च ॥
शर्करामधुसंयुक्तो लेहो मूत्रग्रहापहः ।
विपरीतं प्रमेहेभ्यो मूत्रकृच्छ्रेषु कल्पयेत् ॥
औषधं पानमन्नं च, सुस्निग्धं मृदु शोधयेत् ।
मधुराणीक्षुविकृतीस्त्रपुसानि घृतं पयः ॥
सेवेत, वर्जयेन्नित्यं यत् संग्राहि विदाहि च ।
ऊषकोऽथ बृहत्यौ द्वे श्वदंष्ट्रा वसुकावुभौ ॥
शृङ्गवेरं यवाश्चैव दर्भो वृक्षादनी बला ।
पिप्पली तैः शृतं क्षीरं घृतमात्रादि(वि)मूर्च्छितम् ॥
सरक्ते पाययेत् कृच्छ्रे क्षिप्रमेतेन सिध्यति ।
कनीयसीं पञ्चमूलीं कुलत्थं बदराणि च ॥
शर्करामधुसंयुक्तो लेहो मूत्रग्रहे हितः ।
ससैन्धवो रसः कार्यो मूत्राघाते घृतायु(न्वि)तः ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

सतार्णपञ्चमूलो वा रास्नागोक्षुरकेण वा ।
द्वौ करञ्जौ निगर्भा(?) च कार्पासो मधुशिग्रुकः ॥
श्वदंष्ट्रा वसुकौ द्वौ च मृणालं चोत्पलानि च ।
पिप्पल्यः सैन्धवं चैव सूक्ष्मैला मरिचानि च ॥
एतैः सिद्धां पिबेद्बालो यवागूं ससुवर्चलाम् ।
एतैरेवौषधैर्लेहं शर्करामधुसंयुतम् ॥
प्रयुञ्जीत घृतं चैव पक्वं कृच्छ्रनिवारणम् ।
कनीयसी पञ्चमूली पञ्चकोलयवैः सह ।
कुलत्थमधुशिग्रूणि कार्यश्च सतिलो भवेत् ॥
मन्दस्नेहो रसस्त्वेष सौवर्चलयुतो भवेत् ।
मूत्राघाते प्रयोक्तव्यः शर्करासु विशेषतः ॥
एकत्रिदोषजैः कृच्छ्रैः शर्करास्तुल्यलक्षणाः ।
सुवर्णचूर्णसदृशास्तथा सर्षपसन्निभाः ॥
रोचनेव गवां पित्ते संभवन्त्यनिलात्मनाम् ।
वातेनोन्मथितं मूत्रं खजितं पापकर्मणाम् ॥
शर्कराः स्युर्विवृद्धास्ता अश्मर्यः संभवन्त्यथ ।
तदेतल्लक्षणं तासां नित्यमेव तु वेदना ॥
शर्करा सह मूत्रेण निर्धावत्यपि कस्यचित् ।
शल्यवत्यश्मरी बस्तौ वर्धमानाऽवतिष्ठते ॥
क्षीयते क्षीयमाणस्य पुष्यमाणस्य पुष्यति ।
तस्मान्न नित्यं रुजति तस्योद्धरणमिष्यते ॥
अश्मर्युद्धरणं तीक्ष्णमौषधं स्रोतईरणम् ।
साहसादतिबालेषु सर्वं नेच्छति कश्यपः ॥
इति ह स्माह भगवान् ( कश्यपः ) ।

( इति चिकित्सास्थाने मूत्रकृच्छ्रचिकित्सिताध्यायः ॥ )

---

( इति ताडपत्रपुस्तके १२५ तमं पत्रम् । )

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

अथातो द्विव्रणीयं नामाध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
सूत्रस्थाने भगवता द्वौ व्रणौ परिकीर्तितौ ।
तयोर्विस्तरमिच्छामि श्रोतुं लक्षणमेव च ॥ ३ ॥
अनुग्रहाय बालानां चेष्टाहारौषधानि च ।
इति पृष्टः स शिष्येण संपूज्याह प्रजापतिः ॥ ४ ॥
परतन्त्रस्य समयं प्रब्रुवन्न च विस्तरम् ।
न शोभते सतां मध्ये लुब्धः काक इवार्चितः ॥ ५ ॥
अवश्यं भिषजा त्वेतज्ज्ञातव्यमनसूयया ।
तस्मात् समयमात्रं भो शृणु बालहितेप्सया ॥ ६ ॥

अथ खलु द्वौ व्रणौ निजश्चागन्तुश्च । निजो वाताद्येकैकसर्वद्वन्द्वजः । क्षतभङ्ग(ग्न)विद्धपाटितदग्धच्छिन्ननिष्पिष्टाभिरू(लू)नशस्त्रतृणकाष्ठाग्निविषदन्तनखशापमन्त्रमूलकर्मादिज आगन्तुः । तस्य निजवदेव लक्षणमौषधं च स्वतर्केणानुविदध्यात् ॥ ७ ॥

स्तम्भकाठिन्याल्पस्रावशूलतोदस्फुरणकषायास्यत्वैर्वातिकं विद्यात्, ज्वरदाहमोहतृष्णाशुपाकलौहित्यावदारणारुचिदौर्गन्ध्यैः पैत्तिकं विद्यात्, स्तैमित्यशैत्यमार्दवमन्दवेदनास्नेहपाण्डवचिरकारित्वातिस्रावैः कफजं विद्यात्, सर्वरूपं सान्निपातिकं, द्विदोषं संसृष्टं विद्यात् ॥ ८ ॥

इत्यत्र श्लोकः—

सर्वव्रणानां प्रकृतिर्निरुक्ता दोषदर्शनात् ।
न हि दोषाननाश्रित्य व्रणः कश्चिच्छरीरिणः ॥ ९ ॥

तेषामुपक्रमं धात्रीबालनिग्रहौ, संशमनं, बन्धनम्, उत्क्लिन्नप्रक्षालनं, कल्कप्रणिधानं, शोधनं, रोपणं, सवर्णीकरणम्; इत्येतैः स्नेहपानसंभोजनोपनाहस्वेदोष्णपरिषेकमधुराम्ललवणैर्वातव्रणं, शीतोदकदुग्धपरिषेकशीतप्रलेपनमधुरकषायतिक्तकल्कघृतपानमुद्गशालिजाङ्गलोपचारैरुष्णाम्लकटुलवणबन्धनसंपूरणवर्जनैश्च पैत्तिकव्रणम्, उष्णतीक्ष्णतिक्तकटुकषायक्षारसंशोधनोपनाहस्वेदनोष्णवारिपरिषेकलङ्घनबन्धनस्रावणैः कफव्रणं शमयेत् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

अतो युक्त्येतरान् । स्रावणपाटनदहनसीवनैषणसाहसादीन्यतिबालेषु न कुर्यादिति ॥ १० ॥

अत्र श्लोकाः—

जीर्णैः प्रक्षालितैर्वस्त्रैस्तथा बद्धं निधापयेत् ।
यथौषधं न पतति बालकं च न पीडयेत् ॥ ११ ॥
वैसर्पः श्वयथुर्दाहो ज्वरस्तृडतिबन्धनात् ।
शिथिलादनवस्थानं मध्यमस्तु प्रशस्यते ॥ १२ ॥
वातार्कतृणकाष्ठाम्बुमक्षिकादिभयाद्व्रणम् ।
बन्धो रक्षति शीघ्रं च दह्यते न च खादति ॥ १३ ॥
ज्वरवैसर्पदाहार्तं रक्तपित्तोल्वणं व्रणम् ।
न बध्नीयाद्भिरद्भस्तु सर्वं प्रक्षालयेद्व्रणम् ॥ १४ ॥
द्वे हरिद्रे तिलाः सर्पिः सैन्धवं मधुकं त्रिवृत् ।
अरिष्टपत्रमित्येष कल्कः शोधनरोपणः ॥ १५ ॥
शोधने रोपणे चैव युक्त्या क्षौद्ररसक्रिया ।
तत्र निर्वापणे चोक्ता घृतेनोदकसक्तवः ॥ १६ ॥
समङ्गाधातकीपुष्पमग्रस्थामलकीत्वचम् ।
घृतं कृष्णास्तिला मांसी कल्कोऽयं व्रणरोपणः ॥ १७ ॥
एतैरेवौषधैः सर्वैः सर्पिस्तैलमथो पचेत् ।
व्रणरोपणमित्याहुः कट्फलं वाऽवचूर्णितम् ॥ १८ ॥
ज्वरदाहपिपासार्त्या पच्यमानं व्रणं वदेत् ।
तेषां निवृत्तौ जानीयात् पक्वं पीनोन्नताकृतिम् ॥ १९ ॥
मर्मस्थश्चेदुपेक्ष्यः स्याद्बालं धात्रीं च पूरयेत् ।
गोदध्ना म्रक्षितं चैनं बध्नीयाल्लवणान्वितम् ॥ २० ॥
अमर्मजं पाटयेद्वा नेत्येके पूर्वदर्शनात् ।
रक्तक्षयादल्पभावाद्धन्याद्बालं कुपण्डितः ॥ २१ ॥
पाटितं वा प्र.........................
...................................
...................................

(इति ताडपत्रपुस्तके १२६ तमं पत्रम्[1] ।)

---

१ अस्याग्रे १२७ तमं पत्रं खण्डितं ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

...............................................

...............................................

............(मञ्जि)ष्ठाऽथ मनःशिला ।
प्रलेपः सघृतक्षौद्रः सवर्णकरणः परम् ॥
त्रिफला जातिपुष्पाणि कासीसं लोहपत्रिका ।
लेपः सगोमयरसः सवर्णकरणः परम् ॥
चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेल्लोमरुहा पुनः ॥

अथ खलु बालानामष्टौ पिडकाः स्वशरीरदोषात् स्वदोषाच्चोत्पद्यन्ते। तासां निदानलक्षणे प्रोक्ते; नामरूपचिकित्सां च ब्रूमः—शराविका च कच्छपिका च जालिनी च ताः कफप्रायाः, सर्षपिका चाऽलजी च विद्रधिश्च ताः पित्ताधिकाः, विनता वाताधिका, सर्वदोषजा त्वरुंषिका। तासां लक्षणानि—मध्ये निम्ना शराविका, श्लक्ष्णोन्नता कच्छपिका, सिराजालतनुच्छिद्रवती जालिनी, सर्षपाभाऽल्पाऽऽशुपाकिनी बहुला वा सर्षपिका, बहूपद्रवाऽऽशुपाकवैसर्पाऽलजी, विनता तूदरे पृष्ठे वाऽवगाढनीला रुजावती; मांसपाकस्तु पित्तप्रकोपो वा उत्पद्यते, स एव सन्धिषु मर्मसु वा विद्रधिरित्युच्यते, विदह्याशु अङ्गं विदीर्यत इति विद्रधिः, सा बहिरन्तश्चोत्पद्यते; ते चोभे बालानां कृच्छ्रसाध्ये। त्रिदोषजा त्वरुंषिका चतुर्विधा दोषभेदादेकैकाधिकसमदोषत्वात्; शूलतोदाटोपस्फुरणानाहपामा वातलिङ्गानि, ज्वरतृष्णादाहमोहमदप्रलापाः पित्तलिङ्गानि, शैत्यपैच्छिल्यबहुक्लेदारुचिस्तैमित्यानि कफलिङ्गानि, सर्वैः समदोषत्वम्, अन्यत्रापि च व्रणे पूर्वोक्तानि च लक्षणानि॥

तत्र श्लोकाः—

पूर्वं सराविकाद्यासु सुस्निग्धस्य विरेचनम् ।
शस्यते च भिषक्! तासु व्रणकर्म यथोचितम् ॥
निवर्तनमपक्वासु पिडकासु प्रयोजयेत् ।
परिषेकैः प्रलेपैश्च घृतपानैर्हिताशनैः ॥
अरुंषिकासु सततं शिरसो मुण्डनं हितम् ।
स्नापनं म्रक्षणं चैव व्रणतैलैरनेकशः ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

……द्वे हरिद्रे त्रिकटुकं सैन्धवं वा (च) मनःशिला ।
……सुवर्णजो जपा जातिर्वचा कुष्ठं रसक्रिया ॥
अश्वघ्नमूलोदकणादशमूलं फलत्रयम् ।
एतैर्गोमूत्रसंयुक्तैः प्रमृद्नीयादरुंषिकाम् ॥
एतैरेव पचेत्तैलं हन्ति तच्चाप्यरुंषिकाम् ।
अथ चेद्वेदनां दद्यात्तिलैरुद्वर्तयेत्ततः ॥
स्वादुना व्रणतैलेन नवनीतेन वा दिहेत् ।
अथो सलोहितां छिन्नां क्षुरेणारुंषिकां भिषक् ॥
तुल्याभ्यां क्षीरमूत्राभ्यां सिद्धोष्णाभ्यां प्रलेपयेत् ।
न चेदेवं निवर्तेरन् स्रावणं तु ततः परम् ॥
यदा पक्वेष्टकाचूर्णैरभीक्ष्णं गुण्ड्यते शिशुः ।
त्रपुसैर्वारुबीजं वा खादतोऽङ्गेषु शुष्यति ॥
मेदोऽभिवर्धनं चान्नं दिवास्वप्नं च सेवते ।
तस्य मेदः प्रकुपितं वायुना त्वचमाहृतम् ॥
मेदःपूर्णत्वचानद्धा जनयत्यरकीलिकाः[1] ।
लवकर्तन(तश्चैता) दृश्यन्ते च क्वचित् क्वचित् ॥
कर्कन्धुगोस्तनप्रख्या वर्धमाना भवन्ति च ।
तासां दहनमेवाग्रे तप्तैः स्नेहैर्गुडेन वा ॥
एकैकशो हितं जन्तोश्छित्वा वा क्षारसारणम् ।
बन्धनं क्षारसूत्रैर्वा व्रणकर्म ततः परम् ॥

विरुद्धाद्ध्यशनपूतिपर्युषितात्युष्णविषमाशनात्तुर………णादवलङ्घनादवधूननाद्बीजानां कोद्रवशणबीजमूलकातसीकार्पासानां तुवरीकुलत्थादीनां दह्यमानानां गन्धाघ्राणात् तथा वस्त्रावकर्तनालभल्लातकास्थि………

……………………………………………………………………

……………………………………………………………………

(इति ताडपत्रपुस्तके १२८ तमं पत्रम्[2])

१ अरशलाकाकाराः कीलिका इत्यर्थः ।
२ अस्याग्रे पत्रत्रयात्मको ग्रन्थः खण्डितस्ताडपत्रपुस्तके ।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

..................................................................

..................................................................

..................शालिपिष्टकसाधितम्।

शीतं सशर्करक्षौद्रनवनीतं.... ..........

....लेहयेन्नवनीतं वा लेहयेद्वा तपश्चितम् (?)।

दीप्ताग्निमवसन्नाग्निं स्तन्येनैव तु धारयेत्।

चपलानां तु बालानां सर्पतां वा तथा भृशम्॥

तृणकाष्ठेष्टकाशस्त्रैरन्यैर्वाऽपि क्षतं भवेत्।

आमच्छेदवदे(वेदं) दारुणस्तस्य चात्ययः॥

संदध्यात्तं विनिर्मृज्य सिञ्चेदुष्णोदकेन च।

अथातिरुधिरस्रावे संस्तम्भ्यः शीतवारिणा॥

स्वेदयेद्वा प्रसङ्गे तु दहनं क्षारमेव वा।

सहितं मधुसर्पिर्भ्यां बध्नीयात् पथ्यभोजिनः॥

उभयोर्घृतपानं च विदध्याद्व्रणवत् क्रियाम्।

शीतकालेषु भूयिष्ठं बालानां कुक्षिशायिनाम्॥

स्वमूत्रोपहताङ्गानां मूत्रसंक्लिन्नवाससाम्।

तृणेषु वा शयानानां स्नानोद्वर्तनवर्जिनाम्॥

कृमिमत्कुणयूकानां संभवात्तैश्च भक्षणात्।

गात्रं दद्रुलतां याति कटिदेशे विशेषतः॥

म्रक्षणोद्वर्तनस्नानं गन्धधूपनिषेवणम्।

बालानां शस्यते तत्र शय्यायाश्च विकल्पनम्॥

नित्यमेव तु बालानां निशि स्नेहविमर्दनम्।

हितं निद्राकरं बल्यं वर्धनं श्रमनाशनम्॥

तस्माच्च शस्यते नित्यं बालानां परिमर्दनम्।

महासेनस्य तुष्ट्यर्थं सृष्टः शक्रेण धीमता॥

कुञ्जरो दुस्सहो नाम ऐरावण(त)बलद्युतिः।

स स्कन्देनोपवाह्यश्च कृतः शाखविशाखयोः॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

आभ्यां परमतुष्टाभ्यां ग्रामपोऽस्त्यश्मभिः कृतः ॥
उपग्रहाणां सर्वेषामाधिपत्यं च लम्भितः ।
स यदा क्रुध्यते जन्तोः पूजाकालेष्वपूजितः ॥
पक्षच्छिद्रेषु संध्यासु समाजेषूत्सवेषु च ।
स्वप्ने त्रासयते बालं चतुर्दंष्ट्रो महागजः ॥
सुबुद्ध्यते त्रास्यमानः सहसा वित्रसन् द्रुतम् ।
यत्रैतमङ्गं स्पृशति गण्डस्तत्रास्य जायते ।
मेदोलसीकापूर्णानि प्रसज्यन्ते बहून्यपि ॥
पच्यन्ते कानिचित्तेषां निरायान्त्यपराण्यपि ।
दुःसहं पूजयेत्तत्र पञ्चम्यां नागसत्तमम् ॥
कुलोचितेन न्यायेन तथा नश्यन्ति तान्यपि ।
घृतक्षीराशिनो नित्यं श्लैष्मिकस्यातिभोजिनः ॥
स्वपतो मांसमेदोऽसृग्वृद्धः संवर्तते गदः ।
तस्मान्मातासुतौ चात्र वमनेनोपपादयेत् ॥
शाल्यन्नमुद्गमण्डांस्तु सप्ताहं चोपचारयेत् ।
अशाम्यत्सु विवर्धत्सु शरदाहोऽपि शस्यते ॥
तथैषां छिद्यते मूलं पक्वेषु व्रणवत् क्रिया ।
इति विविधरोगभेषजं मुनिः शिशुजनहिताय कश्यपोऽब्रवीत् ।
तदिदमुपलक्ष्य पण्डितो भिषच्छिशुजनहिताय धारयेत् सदा ॥ क्(छि२)
इति ह स्माह भगवान् कश्यपः ॥

इति (चिकित्सास्थाने) द्वित्रिंशोऽध्यायः ॥

---

## प्रतिश्यायचिकित्सिताध्यायः ।

अथातः प्रतिश्यायचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥

गुरुमधुरशीतरूक्षाभ्यवहारात् सततं द्विविधं वा स्तन्यं पीत्वा पीत्वा स्वपतो नित्यं गुरुत्वाजीर्णयोश्च स्नानात् सश्लेष्मणश्च शीतोदकपानादवगाह-

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

नाच्च भुक्ते चातिपिबतो वेगविधारणाच्च सततं संरुद्धवेगस्याभ्यवहाराच्च नित्यं चानुपहितशायिनोऽतिपार्श्वशयनशायिनोऽपावृतमुखशायिनोऽन्यैश्च निदानैर्मन्दाग्नेर्विषमाशिनो वातः प्रकुपित ऊर्ध्वकफाशयं प्रदूष्य स्रोतांसि प्रतिश्याययति; स यदा मुखस्रोतांसि दूषयति तदा मुखरोगा जायन्ते, यदा श्रोत्रं तदा कर्णरोगाः, यदा नासिकामूलं प्रति कफं पित्तमसृग्वा श्याययति तदा प्रतिश्याय इत्युच्यते ॥ ३ ॥

तस्य प्रतिनद्धा इव शिरोमुखनासिका भवन्तीष्टानिष्टाव्यक्ताश्च ग(न्धाः) ...ते तस्य वातात् प्रतिबन्धः, कफादवैशद्यं, रक्तात् परिक्लेदः, पित्ताद्दौर्गन्ध्यं स्रोतस उपजायते ॥ ४ ॥

स एतदवस्थो जाड्यारोचकहृल्लासप्रतिघातार्थं भृशोष्णतीक्ष्णाम्ललवणेषु प्रसज्यते, ततोऽस्य पित्तं प्रकुप्यति। बलाभिवर्धनात्तस्य ज्वरं तृष्णामन्तर्दाहमरति......नी स्रोतसां वैगन्ध्यं पाकं च दिवाकरावर्तं चोत्पादयति ॥५॥

अतश्चैनं चतुर्विधमृषयो वदन्ति—वातिकः, पैत्तिकः श्लैष्मिकः, सान्निपातिक इति । तद्यथा—यो रौति न रमते जागर्त्यभीक्ष्णं क्षौति नासिका चोत्तानस्यापि तनुश्लेष्म..............................

( इति ताडपत्रपुस्तके १३२ तमं पत्रम् । )

.............................................................

भवति स्निग्धोष्णलवणाम्लोपशयि चेत्तं प्रतिश्यायं वातिकं विद्यात्; ज्वरदाहपिपासाप्रलापितातालुशोषमुखनासिकाक्षिपाकैराशुकफसंपाकैः ... ........................................................ (पैत्ति)कं विद्यात्; चिरकारित्वारोचकहृल्लासशिरोगौरवातिस्रावमन्दक्षवथुमन्याग्रहहृदयप्रलेपाविपाकैरुष्णकटुकषायरूक्षणोपशयैः प्रतिश्यायं कफजं विद्यात्, सर्वरूपं स्रोतोवैगन्ध्यक्रमि.........(सान्निपातिकं विद्यात्) ॥ ६ ॥

(तत्र) श्लोकाः—

वातश्लेष्मोत्तरः प्रायः प्रतिश्यायस्त्रिदोषजः ।
बलाग्निवर्णशमनो निहन्ता चाप्युपेक्षितः ॥ ७ ॥
तस्मात् प्रथमतस्तस्मिन्नुपवासः प्रशस्यते ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

सुखोष्णं दीपनीयाम्बु पिबेद्वा पाञ्चमूलिकम् ॥ ८ ॥
यथाशक्त्य..........................
.........................दकेऽपि वा ॥
यवागूं रक्तशालीनामुष्णां त्रिलवणान्विताम् ।
पिबेद्यवानामथवा दृष्ट्वा दोषबलाबलम् ॥
अग्निप्रावरणोपेतो निवातशयनासनः ।
लघ्वन्नमुष्णं भुञ्जानो मुच्यते नातिसंपिबेत् ॥
वेष्टनं धूमपानं च..................
.........................गुडहरीतकीम् ।
जीर्णे च सर्पिषः पानं निशि भुक्त्वा प्रशस्यते ॥
अशाम्यमाने तेनापि पुराणं पाययेद्घृतम् ।
षट्पलं पञ्चगव्यं वा कल्याणकमथाभयम् ॥
यवान्नं च सदाऽत्युष्णं लवणस्नेहव(र्धि)तम् ।
पिप्प...............................
..................सं पिबेद्वा मरिचान्वितम् ॥
मरिचानि मुखे नित्यं धारयेदापरिक्षयम् ।
सैन्धवोष्णोदकोपेतां पिबेच्छुण्ठीं विमुच्यते ॥
पिप्पलीवर्धमानं वा युञ्जानो वा गुडाभयाम् ।
पथ्याशी रोगतत्त्वज्ञः सात्म्यज्ञश्च विमुच्यते ॥
पटोलपत्रत्रिफला....................
..................प्रतिश्यायाद्विमुच्यते ।
अपानं सर्पिषाऽभ्यज्य निवाते स्वेदयेत् सदा ॥
विष्टम्भिगुरुशीतान्नं दिवास्वप्नं च वर्जयेत् ।
प्रतिश्यायस्य यत् प्रोक्तमेतत् सर्वं चिकित्सितम् ॥
अतिबालस्य तत् सर्वं धात्री कुर्यादशङ्किता ।
इति ह स्माह भगवान् कश्यपः ॥

(इति चिकित्सास्थाने प्रतिश्यायचिकित्सितम् ।)

---

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## उरोघातचिकित्सिताध्यायः ।

(अथात उरोघात)चिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
स्वहेतुकुपिता दोषा उरोघातं चतुर्विधम् ।
कुर्वन्ति सेवमानानां लौल्यमध्यशनादि च ॥ ३ ॥
शीतज्वरः प्रतिश्यायः कण्ठः शूकैरिवावृतः ।
उत्कासिक(का)मन्दक.................... ॥
.................................
........समेति समाख्याता सर्वरोगविनाशिनी ।
एषैव व्योषसहिता हन्त्युरोघातमुद्धलम् ॥
कफाधिके तु सक्षौद्रा लीढाऽऽरोग्याय कल्पते ।
पित्तश्लेष्मोत्तरो व्याधिरुरोघातस्त्रिदोषजः ॥
तस्मात् पित्तकफघ्नानि धात्री (नित्यं समाचरेत्) ।

(इति चिकित्सास्थाने उ)रोघातचिकित्सितम् ॥

---

अथातः शोफचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥

वमनविरेचनोपवासव्याधिकर्शनापथ्याजीर्णेषु यः सदाऽत्यर्थलवणाम्लकटुक्षारोष्णोपसेवी भ(वति)...................................यनान्ते वा लवणादिषु प्रसज्यते, यथेष्टं च शीतोदकस्नानपानशयनव्यवायव्यायामादिभिर्व्यभिचरति तथा तद्गुणक्षीरा वा भवति, तस्याः श्वयथुर्नाम रोग उत्पद्यते दारुणश्चतुर्विधः । दोषा ह्यस्याः.......................
.................................................

.........पथः कृष्णारुणवर्णोऽल्पो रूक्षः पिपीलिकापूर्ण इव सवेदनः पीडितश्च निम्नो भवत्यनिमित्त(रुज)श्चोष्णस्नेहाभ्यां प्रशाम्यति तं वातिकं विद्यात्; नीललोहितपीत...................................

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

[1]

.............................................................................................................

( इति ताडपत्रपुस्तके १३३ तमं पत्रम्[2]। )

## कृमिचिकित्सिताध्यायः ।

....................................

....................................

..............च लाभतः समुपानयेत् ।
पादशेषे जलद्रोणे श्रृते सर्पिर्विपाचयेत् ॥
प्रस्थं सैन्धवसंयुक्तं तत् परं कृमिनाशनम् ।
विडङ्गघृतमित्येतल्लेह्यं शर्करया सह ॥
सर्वकृमीन् प्रणुदति वज्रो मुक्त इवासुरान् ।
तिक्तोष्णकटुरूक्षाणां मूत्राणां लवणस्य च ॥
स्नेहस्वेदोपसेवा च पथ्यं च कृमिनाशने ।
बहिःकृमीणां स्नानाद्यं द्विव्रणीये प्रकीर्तितम् ॥
अतिबालस्य तु शिशोर्धात्री सर्वं समाचरेत् ।
संशोधनैर्विशुद्धं च पथ्यान्नैश्च लघूकृतम् ॥
भावितं चौषधैः क्षीरममृतत्वाय कल्पते ।
अ(ना)त्युष्णं कटुतैलं तु गुदे दत्त्वा ससैन्धवम् ॥
स्वेदयेद्गुदमङ्गुल्या तथाऽऽशु लभते सुखम् ।
इति ह स्माह भगवान् कश्यपः ॥

इति चिकित्सास्थाने कृमिचिकित्सितम् ॥

---

## मदात्ययचिकित्सिताध्यायः ।

अथातः पानात्ययचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥

---

१ मूलताडपत्रपुस्तके अस्मिन् १३३ तमे पत्रे अग्रेतनेषु १३८ तमपत्रतः १५० तमपत्रपर्यन्तपत्रेष्वपि एकपार्श्वे विशेषतो मूषकदंशात् किल शकलापगमनेन प्रायः प्रतिपङ्क्ति न्यूनाधिकभावेन ग्रन्थावयवा विलुप्ताः सन्ति, तेनेत्थं बिन्दुमालाः पुनः पुनर्निवेशिताः ।

२ अस्याग्रे पत्रद्वयात्मको ग्रन्थो लुप्तस्ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

मद्यप्रवृत्तौ रोगस्तु प्रोच्यते त्रिविधो नृणाम् ।
पानात्ययो विभ्रमश्च पानापक्रम एव च ॥ ३ ॥
तत्र योऽध्युषिते पाने त्वजीर्णे पिबते नरः ।
तत् पानमत्ययं याति तस्मात् पानात्ययो मतः ॥ ४ ॥
विभ्रान्तानां तु पानानां सेवनात्(पानविभ्रमः) ।
सहसा पानविच्छेदः पानापक्रम उच्यते ॥ ५ ॥
दीपनं रोचनं वृष्यं रतिवैशद्यकारकम् ।
कार्श्यचित्तश्रमहरं हर्षणं बलवर्धनम् ॥ ६ ॥
युक्तोपसेवितं मद्यं सात्त्विकानां विशेषतः ।
प्रमोदारोग्यपुष्टीनां तन्मूलं चान्नभोजनम् ॥ ७ ॥
स्तन्यक्षये च धात्रीणामुत्पन्ने चाप्य...... ।
.........वातशूलेषु शीतके विषमज्वरे ॥ ८ ॥
नारीणां सुकुमारीणां रोगेषु विविधेषु च ।
सूतानां दुष्प्रजातानां योनिभ्रंशेऽतिमैथुने ॥ ९ ॥
दन्तजन्मनि बालानां पीडितानां पिपासया ।
तालुकण्ठौष्ठशोषे च रोदितेऽतिप्रजागरे ॥ १० ॥
वातश्लेष्मात्मके व्याधौ मद्यमाहुर्यथाऽमृतम् ।
तदेवातिप्रसङ्गेन पीयमानं पुनः पुनः ॥ ११ ॥
सर्वव्याधिमुखं प्रोक्तं विषवत् कारयत्यपि ।
मदात्ययं वातकरं कृच्छ्रसाध्यं करोति वा ॥ १२ ॥
तरुणं वाऽप्यजीर्णे वा यो मद्यमतिसेवते ।
लघुसत्त्वो निराहारो रसस्तस्य विदुष्यति ॥ १३ ॥
अनिलं रूक्षतीक्ष्णत्वात् पित्तमौष्ण्याद्विपाकतः ।
युगपत् कुपितौ दोषौ प्रासावामाशयं ततः ॥ १४ ॥
विष्टब्धश्लेष्मणा(ऽ)त्यक्तौ विप्लवेते महासिराः ।
ततो हृदयमूलासु विप्लुतासु सिरासु च ॥ १५ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

शरीरं क्लिश्यतेऽत्यर्थं तस्य वक्ष्यामि लक्षणम् ।
मुह्यते घृष्यते रौति दह्यते ज्वर्यते भृशम् ॥ १६ ॥
हृद्द्रवो वेपथुर्हर्षः पार्श्वशूलं शिरोरुजा ।
अरुचिः स्वेदविष्टम्भो विह्वलत्यतिसार्यते ॥ १७ ॥
शुष्यते............याति विलपत्यपि ।
एवं मदात्ययं विद्यात्तस्य वक्ष्यामि लक्षणम् ॥ १८ ॥
हृत्पार्श्वपर्वरुजनं प्रलापोऽतिप्रजागरः ।
उन्मत्त इव चाभाति पवनोत्थे मदात्यये ॥ १९ ॥
स्रोतःपाको ज्वरो दाहो विड्भेदः स्वेदपीतता ।
छर्दी रक्तप्रकोपो वा पीतं पश्यति पैत्तिके ॥ २० ॥
आ............सेकच्छर्दिशीतज्वरालसाः ।
तन्द्रा स्तम्भो विसंज्ञत्वं विषादश्च कफात्मके ॥ २१ ॥
श्वासकासभ्रमोत्सादविड्भेदानाहवेपकाः ।
शूलमोहौ च सामान्यौ सर्वरूपस्तु सर्वजः ॥ २२ ॥
भूयिष्ठमामप्रभवं प्रवदन्ति मदात्ययम् ।
तस्मान्मदात्यये पूर्वं हितं लङ्घनमेव तु ॥ २३ ॥
प्रकांक्षा लाघवं स्थैर्यमिन्द्रियाणां प्रसन्नता ।
रोगोपशान्तिर्वाक्छुद्धी रूपं सम्यग्विशोषिते ॥ २४ ॥
एतानि कृत्वा विकृतिं याति चातिविशोषणात् ।
असंप्राप्तिमथैतेषां जानीयात्तमलङ्घिते ॥ २५ ॥
इत्येतैः कारणैर्दृष्ट्वा विदग्धमदपीडितम् ।
पाययेत्तर्पणं काले शीतं दाडिमवारिणा ॥ २६ ॥
येनैव मद्येन भवेत् समुत्पन्नो मदात्ययः ।
तथैवोपहरेत् पातुं बहुशीतोदकान्वितम् ॥ २७ ॥
कायाग्निस्तन्मयो ह्यस्य सिरा रसवहास्तथा ।
मनश्च भावितं तेन तस्मात्तद्ध्यस्य भेषजम् ॥ २८ ॥


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

एष एव यथालाभं परिषेकः सुखावहः ।
शारिवा मूलकं शुष्कं शुकनासा महौषधम् ॥ ५४ ॥
कुष्ठं मुस्ता जलं लम्बा प्रलेपः शोफनाशनः ।
श्वदंष्ट्रैरण्डमूलं च बिल्वमूलं महौषधम् ॥ ५५ ॥
पुराणमूलकं चैषां क्वाथे क्षीरं विपाचयेत् ।
क्षीरावशेषमाहृत्य काले सघृतशर्करम् ॥ ५६ ॥
यथाग्नि पाचयेदेनं वातश्वयथुनाशनम् ।
एरण्डतैलं पयसा गवां मूत्रेण वा पिबेत् ॥ ५७ ॥
तेनास्य दोषशेषश्च श्वयथुश्च निवर्तते ।
लघून्यन्नानि भुञ्जीत स्निग्धोष्णसहितानि च ॥ ५८ ॥

(इति ताडपत्रपुस्तके २४२ तमं पत्रम्)

अथ पित्तसमुत्थस्य प्रवक्ष्यामि चिकित्सितम् ।
अभयाऽऽमलकीदन्तीत्रिकर्ममधुचन्दनैः ॥ ५९ ॥
संजीवनीयमञ्जिष्ठैर्मधूककुसुमैः समैः ।
सक्षीरैः पाचितं सर्पिः शोफस्याभ्यञ्जनं परम् ॥ ६० ॥
पानं चैतत् प्रदातव्यं शोफरोगनिवारणम् ।
जीवकर्षभकावैन्द्री मधुपर्णी शतावरी ॥ ६१ ॥
मुदिता वेतसं चैव प्रलेपः सरसाञ्जनः ।
तालीशोशीरमुदिताचन्दनं सरसाञ्जनम् ॥ ६२ ॥
मधुकं पद्मकं चेति लेपः श्वयथुनाशनः ।
शतावरीं हंसपदीं मधुपर्णीं च चित्रकम् ॥ ६३ ॥
बन्दां तालीसपत्रं च पिष्ट्वा श्वयथुमादिहेत् ।
क्षीरद्रुमाणां त्वङ्मूलक्वाथस्तु परिषेचने ॥ ६४ ॥
सदाहरागपाके च हितः सक्षीरशर्करः ।
त्रिवृन्मधुकमृद्वीकाकाश्मर्याभिः शृतं पयः ॥ ६५ ॥
विरेचनीयमन्यद्वा यथावस्थं प्रयोजयेत् ।
नात्यच्छस्निग्धशीतानि स्वादूनि च लघूनि च ॥ ६६ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पयो द्रवाणि भुञ्जीत यथोक्तानि च मात्रया ।
श्वयथोः कफजस्यापि चिकित्सां शृण्वतः परम् ॥ ६७ ॥
ह्रीबेरागरुदारूणि चव्यचित्रकनागरम् ।
अभया पिप्पलीमूलं रजन्यौ हिङ्गु मात्रया ॥ ६८ ॥
क्वाथं गोमूत्रपिष्टं वा पिबेच्छोफनिबर्हणम् ।
चित्रकारग्वधौ मूर्वाविडङ्गामलकाभयाः ॥ ६९ ॥
पिप्पलीशारिवापाठाकषायं मधुना पिबेत् ।
देवदारु च पाठां च शृङ्गवेरं च भागशः ॥ ७० ॥
तथा पुष्करमूलं च गोमूत्रक्वथितं पिबेत् ।
पाठा मुस्ताऽभया दारु चित्रको विश्वभेषजम् ॥ ७१ ॥
पिप्पल्यतिविषा मूर्वा तथा ताडकपत्रिका ।
बाधासु तत् पिबेत् पूतं कफश्वयथुनाशनम् ॥ ७२ ॥
तगरागरुमुस्तानि सरलं देवदारु च ।
कुष्ठं त्वचा च लेपोऽयं कफश्वयथुवारणः ॥ ७३ ॥
कालां गोधापदीं हिंस्रां सुषवीं तालपत्रिकाम् ।
पिष्ट्वा शीतकमूलं च शोथमस्य प्रलेपयेत् ॥ ७४ ॥
कुष्ठच्छत्राकवल्कं च यातुमूलं त्रिकण्टकम् ।
भद्रदारुं सुगन्धां च पिष्ट्वोष्णैः शोफमादिहेत् ॥ ७५ ॥
मूलकानि च शुष्काणि भद्रमुस्तं सशारिवम् ।
गोमूत्रपिष्टो लेपोऽयं श्वयथोर्विनिवारणः ॥ ७६ ॥
पलाशभस्म चैकाङ्गलेपो गोमूत्रसंयुतः ।
श्लैष्मिके श्वयथावेष परिषेको विधीयते ॥ ७७ ॥
पञ्चमूलशृतं तोयं गोमूत्रं वाऽपि केवलम् ।
निम्बाङ्कोठोरुपूगानां तर्कार्याः कुटजस्य च ॥ ७८ ॥
नक्तमालस्य वंशस्य पत्रक्वाथोऽवगाहनः ।
त्रिफला चित्रकवचे द्वे हरिद्रे कुठेरकः ॥ ७९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

श्यामाखुपर्णीकटुकाकाकमाचीसुवर्चलाः ।
वार्ताकी निचुलं निम्बो विडङ्गं विश्वभेषजम् ॥ ८० ॥
रास्ना पुनर्नवा मूर्वा कुष्ठं व्याघ्रनखं वृषम् ।
शिग्रुमूलमथार्कं च यथालाभं समाहृतैः ॥ ८१ ॥
गोमूत्रपिष्टैर्लेपः स्यात् क्वथितैः परिषेचनम् ।
एतैरेव द्रवैः पक्वैरभ्यङ्गः शोथनाशनः ॥ ८२ ॥
पटोलमूलं त्रिफला विडङ्गं रजनीति षट् ।
कार्षिकाः स्युस्तथैकस्माद्विगुणं रोचनीफलम् ॥ ८३ ॥
नीलिका त्रिगुणा देया त्रिवृता तु चतुर्गुणा ।
चूर्णमेतद्गवां मूत्रसंयुतं मात्रया पिबेत् ॥ ८४ ॥
काले विरिक्तो भुञ्जीत जाङ्गलानां रसेन तु ।
त्रिफला सरलं दारु रजन्यो रोहिणी वचा ॥ ८५ ॥
पिप्पली पिप्पलीमूलं नागरातिविषे घनम् ।
क्षारद्वयं विडङ्गं च पाठाऽगरु सचित्रकम् ॥ ८६ ॥
अयोरजश्च चूर्णानि गोमूत्रेण विपाचयेत् ।

( इति ताडपत्रपुस्तके २४३ तमं पत्रम् )

द्रा(क्षाव)लयमाहृत्य गुटिका बदरोपमाः ॥ ८७ ॥
कृत्वाऽथैकां ततो द्वे वा पिबेदुष्णेन वारिणा ।
मुच्यते कफजाच्छोफादेवं श्वयथुपीडितः ॥ ८८ ॥
एषा हि ग्रहणीदोषं पाण्डुरोगं कफात्मकम् ।
कफार्शांसि च वृद्धिं च प्रमेहं च शमं नयेत् ॥ ८९ ॥
पञ्चमूलं वरुणकं सरलं देवदारु च ।
हस्तिकर्णपलाशश्च फलानि निचुलस्य च ॥ ९० ॥
पलाशः काकला काला गुडूची देवपुष्पकम् ।
अहिंस्रा श्रेयसी हिंस्रा कृष्णगन्धा पुनर्नवा ॥ ९१ ॥
कायस्था च वयस्था च चोरको जटिला जटा ।
अलम्बुषं सोरुपूगं प्रपुन्नाडं सनागरम् ॥ ९२ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

शिग्रुर्गोधापदी भार्गी तर्कारी शुष्कमूलकम् ।
एतैः सिद्धं यथालाभं तैलमभ्यञ्जनैस्त्रिभिः ॥ ९३ ॥
निहन्त्युदीर्णश्वयथुं जन्तोर्वातकफोत्तरम् ।
उभे हरिद्रे मञ्जिष्ठा यष्टीमधुकचन्दनम् ॥ ९४ ॥
पिप्पल्यो वालकं चैव पीतद्रुः पद्मकं तथा ।
मांस्युशीरं सतगरमेलाऽगरु कुटन्नटम् ॥ ९५ ॥
श्रीवेष्टकं सर्जरसं मूर्वाकुष्ठप्रियङ्गवः ।
एतैस्तैलं विपक्तव्यमभ्यङ्गाच्छोथनाशनम् ॥ ९६ ॥
क्रियैषा दोषजस्योक्ताऽऽगन्तोर्वैसर्पवत् क्रिया ।
अग्निसादो ज्वरस्तृष्णा कार्श्यारुचितमोभ्रमाः ॥ ९७ ॥
श्वासव्रणातिसाराश्च स्वैश्चिकित्स्या उपद्रवाः ॥ ९८ ॥
इति ह स्माह भगवान् कश्यपः ॥ अग्र (१०६)

(इति) खिलेषु श्वयथुचिकित्साध्यायः सप्तदशः ॥ १७ ॥

---

## शूलचिकित्साध्यायोऽष्टादशः ।

अथातः शूलचिकित्सितं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
क्षोभात्त्रासाध्ययनातिप्रसङ्गात् क्षुत्काले चात्यम्भसः पानदोषात् ।
वेगानां वा निग्रहाद्यानयानादामाद्धंसाद्रूक्षधान्याशनाद्वा ॥ ३ ॥
क्रुद्धो वायुः कर्तनायामतोदैः कम्पाध्मानैराविशन् कुक्षिदेशे ।
शूलं पित्तेनान्वितः श्लेष्मणा वा द्वाभ्यां वाऽपि प्रेर्यमाणः करोति ॥४॥
वाताच्छूलं क्षुधितस्योग्ररूपं घोरैर्वेगैर्यन्निरुच्छ्वासकर्तृ ।
विद्याद्भुक्ते जीर्यति स्वेददाहतृष्णार्तस्य प्रततं पित्तशूलम् ॥ ५ ॥
मन्दाबाधं स्तिमितं भुक्तमात्रे कफोद्रेकात् स्तम्भहृल्लासकर्तृ ।
विद्याच्छूलं सन्निपाताच्चतुर्थं सर्वैर्लिङ्गैर्दुःसहं तत्त्वसाध्यम् ॥ ६ ॥
वायुः प्रोक्तो बलवानुग्रवेगः(सोऽयं)क्रुद्धो देहमाश्वेव हन्ति ।
तस्मादादावर्दितं वातशूलेनाऽभ्यक्ताङ्गं स्वेदयेदाशु वैद्यः ॥ ७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

वातघ्नोष्णैरवगाहोपनाहैः पिण्डस्वेदैरुष्णकैः पायसैर्वा ।
एणादीनां जाङ्गलानां रसांश्च लावादीनां चान्वितान् सैन्धवेन ॥ ८ ॥
स्निग्धोष्णाम्लान् शीलयेद्वातशूली वातघ्नैर्वा साधितं क्षीरमुष्णम् ॥९॥
तैलं शुक्तं मस्तु सौवीरकं च पिबेच्छूली सह सौवर्चलेन ।
श्यामां शुण्ठीं सैन्धवं तुम्बुरूणि हिङ्गु क्षारं यावशूकं विडं च ॥ १० ॥
श्लक्ष्णं पिष्ट्वा प्रवराह्वं शटिं च पेयं कोष्णं चाम्भसा वातशूले ।
क्षीरं पीत्वा शीतलं पित्तशूली वमेत् कामं शर्करावारिणा वा ॥११॥
शूलार्तं वा शङ्खकुन्देन्दुगौरैर्मुक्ताहारैः संस्पृशेत् पङ्कजैर्वा ।
रौप्यैः कांस्यैः स्फाटिकैः काञ्चनैर्वा (तोया)सिक्तैर्भाजनैश्चन्द्रशीतैः १२
यस्मिञ्छूलं संस्पृशेत्तं प्रदेशं भूयो भूयः कदलीनां दलैर्वा ।
मृद्वीं शय्यां विसिनीपत्रभक्तिन्यासोपेतां चन्दनाम्बुप्रसिक्ताम् ॥ १३ ॥
शीते वेश्मन्यहतां सोपधानां सेवेतान्तःप्रस्फुरत्पद्मपत्राम् ।
हृद्याः शीता मधुरा भेदनीयाः पेयाः सिद्धाः शीतला वा कषायाः ॥१४॥

( इति ताडपत्रपुस्तके २४४ तमं पत्रम् । )

क्षौद्रोन्मिश्राः स्वादवः पित्तशूलस्योच्छेदार्थं शर्कराचूर्णयुक्ताः ।
सामे सोत्क्लेशे भोजने वा विदग्धे संशुद्ध्यर्थं सैन्धवोष्णोदकेन ॥१५॥
कुर्यात् कामं वमनं श्लेष्मशूले वान्तं चैनं लङ्घितं सुप्रतान्तम् ।
क्षारोपेतं पाययेत् पाचनीयं पिप्पल्यादिक्काथमुष्णं सहिङ्गु ॥ १६ ॥
तत्सिद्धां वा भोजयेत्तं यवागूं संसृष्टान्नः क्रमशो वा निषेवेत् ।
चूर्णं सर्पिर्वटकक्षारबस्तीन् कल्कक्काथान् भागशः कल्पशश्च ॥ १७ ॥
शूलाटोपानाहगुल्मामयघ्नं सिद्धं प्रोक्तमृषिभिर्ध्यानयोगात् ॥ १८ ॥

हिङ्गुपाठात्रिकटुकक्षारसैन्धवचित्रकान् ।
हपुषामभयां चव्यमजाजीधान्यपुष्करान् ॥ १९ ॥
अम्लवेतसवृक्षाम्लयवानीदाडिमानि च ।
शटिं सौवर्चलं चैव सूक्ष्मचूर्णानि कारयेत् ॥ २० ॥
एतद्धि चूर्णमुष्णाम्बुदधिमस्तुसुरासवैः ।
पीतमानाहहृद्बस्तिशूलगुल्मार्तिनाशनम् ॥ २१ ॥

CC-0.Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

प्लीहार्शोग्रहणीदोषकासश्वासानुरोग्रहम् ।
मातुलुङ्गरसैर्युक्तं हन्ति मूत्रग्रहं तथा ॥ २२ ॥
अम्लवेतसवृक्षाम्लयवानीक्षारचित्रकम् ।
हिङ्गुचव्योषकशटीजीवन्तीत्रिकटूनि च ॥ २३ ॥
पिप्पलीं पिप्पलीमूलं बदरं शिरिवारिकाम् ।
नागदन्तीं च बिल्वं च तथा लवणपञ्चकम् ॥ २४ ॥
समभागानि मतिमान् सूक्ष्मचूर्णानि कारयेत् ।
रसेन मातुलुङ्गस्य वटकान् कारयेत्ततः ॥ २५ ॥
गुल्मोदावर्तशूलेषु पिबेदेतान्महागुणान् ।
सुखोष्णवारिमद्याम्लैर्मूत्रकृच्छ्रे तथैव च ॥ २६ ॥
हृद्रोगेषु गुदभ्रंशमेढ्रबस्तिरुजासु च ।
विडदाडिमहिङ्गूनि सैन्धवं मरिचं तथा ॥ २७ ॥
मातुलुङ्गरसैर्युक्तं शूलाटोपहरं पिबेत् ।
एतानि व्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ॥ २८ ॥
साजाजिपिप्पलीमूलयुतैर्वा पथ्यमुत्तमम् ।
सौवर्चलवचाहिङ्गुत्र्यूषणं सहरीतकम् ॥ २९ ॥
सुरेशयवसंयुक्तं हन्ति शूलबलं क्षणात् ।
पलिकान् घृतसंयुक्तान् सक्तुसैन्धवचित्रकान् ॥ ३० ॥
वचां चैवैकतः कृत्वा कटाहे प्रदहेद्भिषक् ।
प्रदीप्तमवतार्याथ तं क्षारं मात्रया पिबेत् ॥ ३१ ॥
तण्डुलोदकसंयुक्तं शूलगुल्मरुजापहम् ।
पञ्चमूलयवक्वाथयुक्तमेरण्डजं पिबेत् ॥ ३२ ॥
तैलं वाय्वात्मके शूले द्राक्षाक्वाथयुतं तथा ।
सशर्करं पित्तशूले पित्तगुल्मे प्लिहेषु च ॥ ३३ ॥
दाडिमव्योषहपुषापृथ्वीकाक्षारचित्रकैः ।
साजाजिपिप्पलीमूलचव्यदीप्यकसैन्धवैः ॥ ३४ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

समांशैर्विपचेत् सर्पिः सक्षीरं मृदुनाऽग्निना ।
कोलमूलकयूषेण संयुक्तं वातगुल्मनुत् ॥ ३५ ॥
शूलानाहश्वासकासविषमज्वरहृद्ग्रहान् ।
अरुचिग्रहणीदोषशूलपाण्ड्वामयांस्तथा ॥ ३६ ॥
योनिदोषांश्च हन्त्येतदमृतप्रतिमं घृतम् ।
बिल्वकुष्ठयवक्षारवचाचित्रकसैन्धवैः ॥ ३७ ॥
एनीयकविडव्योषतिन्तिडीकाम्लवेतसैः ।
हिङ्गुसौवर्चलाजाति(जि)दाडिमेन्द्रयवैस्तथा ॥ ३८ ॥
पुनर्नवाकारवीभ्यां हंसपद्या च साधितम् ।
घृतं चतुर्गुणे दध्नि शुक्तकाति(जि)कसंयुतम् ॥ ३९ ॥
द्विपञ्चमूलकोलानां कुलत्थानां रसेन च ।
शूलगुल्मानिलोत्कम्पग्रन्थीनर्दितहृद्ग्रहान् ॥ ४० ॥
वातकुण्डलिकावर्तमेतत् सर्पिरपोहति ।
सौवर्चलयवक्षारवचात्र्यूषणचित्रकैः ॥ ४१ ॥
हरीतकीविडङ्गाभ्यां पयसा चैव साधितम् ।
(इति ताडपत्रपुस्तके २४५ तमं पत्रम् ।)
संयुक्तं भद्ररोहिण्या दशाङ्गं शूलनुद्धृतम् ॥ ४२ ॥
प्लीहगुल्मक्रिमिश्वासकासहिक्काविनाशनम् ।
शतपुष्पावचाकुष्ठपिप्पलीफलसैन्धवैः ॥ ४३ ॥
सर्षपद्वयसंयुक्तां फलवर्तिं प्रयोजयेत् ।
एषाऽऽध्मानमुदावर्तं शूलं चाशु व्यपोहति ॥ ४४ ॥
उष्णोदकस्नेहयुक्तं मूत्रक्षौद्राम्लकाञ्जिकैः ।
संयोज्यैकत्र मतिमानेभिश्चूर्णैः समावपेत् ॥ ४५ ॥
शताह्वापिप्पलीकुष्ठवचानां देवदारुणः ।
पूतीकस्य हरेणूनां बिल्वानां मदनस्य च ॥ ४६ ॥
शूलानाहविबन्धघ्नमिमं बस्तिं प्रदापयेत् ।
आस्थापनप्रमाणेन स्निग्धस्विन्नस्य देहिनः ॥ ४७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

संरुद्धे वायुना मूत्रे प्रतिस्तब्धे तथोदरे।
पुरीषे च विमार्गस्थे चूर्णबस्तिरयं हितः॥ ४८॥
वारिद्रोणे पलान्यष्टौ पचेद्गन्धपलाशकात्।
ततः कषायं तु वचापिप्पलीफलसैन्धवैः॥ ४९॥
संयुक्तं क्षौद्रतैलाभ्यां शताह्वाकुडवेन च।
दद्यान्निरूहमानाहपार्श्वहृद्बस्तिशूलिनाम्॥ ५०॥
बलवर्णाग्निजननं श्रोणिगुल्मरुजापहम्।
कुलत्थयवकोलानि पञ्चमूलद्वयं तथा॥ ५१॥
क्वाथयेत्तं जलद्रोणे ततस्तं तैलसंयुतम्।
कषायं पिप्पलीकुष्ठवचेन्द्रयवसर्षपैः॥ ५२॥
हरेणुकासैन्धवाभ्यां तगरेण घृतेन वा।
तन्निरूहमुदावर्तकुष्ठगुल्मोपशान्तये॥ ५३॥
दद्याच्चैवेदमाश्वेव बलवर्णाग्निवर्धनम्।
तैलपक्वाशनं धीरः कल्कपेष्यैर्विपाचितम्॥ ५४॥
पिप्पलीबिल्वमधुकशताह्वाफलचित्रकैः।
देवदारुवचाकुष्ठपुष्कराख्यैश्च संयुतम्॥ ५५॥
समांशैर्द्विगुणक्षीरं तदुदावर्तिनां हितम्।
शूलानाहगुदभ्रंशवर्चोमूत्रविनिग्रहान्॥ ५६॥
कट्यूरुपृष्ठशूलार्शोमूढवातांश्च नाशयेत्।
गुदशूलं तथोत्थानं बहुशः सप्रवाहिकम्॥ ५७॥
कुष्ठं विडङ्गातिविषादारुदार्वीहरेणुकाः।
एलाऽजमोदा ह्रीबेरं नागरं पुष्करं शटी॥ ५८॥
स्थिरा सकट्फला रास्ना पिप्पल्यश्वव्यचित्रकम्।
श्यामा शताह्वा यष्ट्याह्वा सैन्धवं मदनं वचा॥ ५९॥
निचुलं नीलिनी दन्ती बिल्वं चाक्षार्धसंश्रि(मि)तैः।
गन्धर्वतैलं तैलं वा पचेत्तदनुवासनम्॥ ६०॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

गुल्माढ्यवातशूलार्शःप्लीहोदावर्तवृद्धिनुत् ।
सकुण्डलं मूत्रकृच्छ्रमानाहं च व्यपोहति ॥ ६१ ॥
शतार्धं दशमूलस्य मदनानां तथाऽऽढकम् ।
पूतीकदन्तीसुरभीश्वदंष्ट्राणां च बुद्धिमान् ॥ ६२ ॥
पलानि विंशतिं दद्यादेकैकस्य तमेकतः ।
यवकोलकुलत्थानां प्रस्थयुक्तं जलोन्मने ॥ ६३ ॥
क्काथयेत् पादशेषं तु तस्मिंस्तैलाढकं पचेत् ।
गोमूत्रार्धाढकं यवपिप्पलीसैन्धवत्रिकम् ॥ ६४ ॥
.........यवशताह्वानां......वलीनकैः ।
कुष्ठवक्र(क्र)स्य(त्व)चा युक्तमेतत् स्यादनुवासनम् ॥ ६५ ॥
ऊरुस्तम्भकटीपृष्ठगुदवंक्षणशूलिषु ।
प्लीहोदावर्तगुल्मेषु फलतैलं प्रयोजयेत् ॥ ६६ ॥
इति शूलचिकित्सा ते विस्तरेण प्रकीर्तिता ।
सिद्धैः प्रयोगैर्विविधैः प्राणिनां हितकाम्यया ॥ ६७ ॥
इति ह स्माह भगवान् कश्यपः ॥ चू १ (७१)
(इति) खिलेषु शूलचिकित्साध्यायोऽष्टादशः ॥ १८ ॥ डाड (१८) ।

---

## अष्टज्वरचिकित्सितोत्तराध्याय एकोनविंशतितमः ।

अथातोऽष्टज्वरचिकित्सितोत्तरमध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
एकद्वित्रिसमुत्थानां निदानं प्रागुदाहृतम् ।
चिकित्सां संप्रवक्ष्यामि सन्निपातस्य हेतुवत् ॥ ३ ॥
(इति ताडपत्रपुस्तके २४६ तमं पत्रम्)

अहिता................................ ।
...............................गुडसंयुतः ॥

---

१ अस्याग्रे पत्रत्रयं लुप्तं ताडपत्रपुस्तके ।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटलिस्तथा ।
एषां तु मूलं निष्काथ्य पिबेत् सक्षारसैन्धवम् ॥
समङ्गी मधुकं मुस्तं भद्रदार्वथ शर्करा ।
वातज्वरे प्रयोक्तव्यं गुडूच्या सह पानकम् ॥
विदारिगन्धा ह्येरण्डं बृहत्यौ पृश्निपर्णिका ।
भद्रदारुसमायुक्तो वातज्वरहरो मतः ॥
विदारिगन्धा कलशी तथा गन्धर्वहस्तकः ।
मधुकं भद्रदारुश्च क्काथः शर्करया युतः ॥
वातज्वरहरो देयो मातुलुङ्गरसाप्लुतः ।
एरण्डं वरुणं चैव बृहत्यौ मधुकं तथा ॥
वातज्वरहरः क्काथो रास्नाकल्कसमायुतः ।
द्विपञ्चमूलनिष्काथः कोष्णो वा यदि वा हिमः ।
रास्नाकल्कसमायुक्तो वातज्वरहितो मतः ॥
रास्नासरलदेवाह्वयष्टीमधुकसंयुतः ।
पेयो विदारिगन्धाद्यो निष्काथो वा ससैन्धवः ॥
पञ्चमुष्टिकयूषेण युक्ताम्ललवणेन च ।
भुञ्जीत भोजनं काले जाङ्गलानां रसेन च ॥
पिबेदन्तरपानं च बिल्वमूलश्टतं जलम् ।
द्वे पञ्चमूले वर्चीवमेकेषीकां पुनर्नवाम् ॥
सहस्रवीर्यां नादेयीं शतवीर्यां शतावरीम् ।
विश्वदेवां शुकनसां सहदेवां सनाकुलीम् ॥
रास्नाजगन्धे पूतीकं देवाह्वं देवताडकम् ।
बले द्वे हंसपादीं च क्काथोत्थीसुपलङ्कशाम् (?) ॥
कृष्णागरुं व्याघ्रनखं शतपुष्पां पलङ्कषाम् ।
कायस्थां च वयस्थां च चोरकं जटिलां जटाम् ॥
अपेतराक्षसीं यक्षां गुहाह्वामुष्ट्रलोमिकाम् ।
हरेणुकां हैमवतीं कैटर्यं सुवहां वचाम् ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

वृश्चिकालीं च भार्गीं च...स्या शिग्रुं च कल्कशः।
संहृत्य तैलं विपचेद्वातज्वरनिबर्हणम्॥
पुराणसर्पिःसंस्कारो विधेयो जाङ्गलो रसः।
दशमूलकुलत्थानां यवानां कुडवस्य च॥
कुलीरशृङ्ग्या रास्नायाः शटीपुष्करमूलयोः।
भार्ग्या दुरालभायाश्च निर्यूहः साधु साधितः॥
तेनास्य विगुणो वायुर्ज्वरश्चाशु प्रशाम्यति।
वातश्लेष्मसमुत्थस्य व्याख्यास्यामि चिकित्सितम्॥
बृहत्यौ पुष्करं दारु पिप्पल्यो नागरं शटी।
क्वाथमेषां पिबेदुष्णमादौ दोषविपाचनम्॥
द्विपञ्चमूलं भार्गीं च कर्कटाख्यां दुरालभाम्।
नागरं पिप्पलीं दारु पिबेद्वा सैन्धवान्वितम्॥
पटोलं धान्यकं मुस्ता मूर्वा पाठा निदिग्धिका।
कषाय एषां पातव्यः षडङ्गो मधुसंयुतः॥
त्रिफला जीवनीयानि पिप्पलीमूलशर्करे।
सिद्धो ग्रहघ्नसंयुक्तो वातश्लेष्मज्वरापहः॥
नागरं दश(मूलं) च कट्वङ्गं दारुकद्वयम्।
पिप्पल्यस्त्रिफला भार्गी कर्कटाख्या दुरालभा॥
वातश्लेष्मज्वरे पेयं सुखोष्णं सैन्धवान्वितम्।
तिक्तकं कटुरोहिण्याः कल्कमक्षसमं भिषक्॥
हिङ्गुसैन्धवसंसृष्टं पिबेत् क्षिप्रं सुखाम्बुना।
कफजेऽनिलजे चैव ज्वरे पीतं सुखावहम्॥
महतः पञ्चमूलस्य क्वाथः श्लैष्मिकवातिके।
नागरामरदारुभ्यां शृतमुष्णं पिबेज्जलम्॥
बालमूलकयूषेण जाङ्गलानां रसेन वा।
कटूष्णद्रव्ययुक्तेन मन्दस्निग्धेन भोजयेत्॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

लाक्षाप्रियङ्गुमञ्जिष्ठायष्टिकोशीरबालकैः ।
चन्दनागरुबाह्लीकश्रीवेष्टककुटन्नटैः ॥
मूर्वाशताह्वासरलसालनिर्यासरोचकैः ।
क्षीरद्रोणेऽर्धपलिकैर्भिषक्तैलाढकं पचेत् ॥
तत् साधु सिद्धमाहृत्य स्वनुगुप्तं निधापयेत् ।
लाक्षादिकमिदं तैल.....................

(इति ताडपत्रपुस्तके २५० तमं पत्रम्)

..................................

..................................

(पिप्प)ल्योऽतिविषा मुस्ता स्थिराढ्या सदुरालभा ॥
सचन्दनयवोशीरसारिवाः सनिदिग्धिकाः ।
रोहिण्यामलकं बिल्वं त्रायमाणातिसाधितम्[1] ॥
घृतं हन्ति शिरःशूलं कासं जीर्णज्वरं क्षयम् ।
वमनं कफरोगाणां पैत्तिकानां विरेचनम् ॥
शोधनं शमनं कार्यं कृशे शमनशोधनम् ।
मण्डादिरिष्यते सामे यवागूर्वातजे तथा ॥
विषौषधिप्रजातानां पित्तघ्नीं कारयेत् क्रियात् ।
सन्निपातज्वरस्यातः प्रवक्ष्यामि चिकित्सितम् ॥
स सर्वलक्षणोऽसाध्यः कृच्छ्रसाध्योऽल्पलक्षणः ।
बलहीनस्य नष्टाग्नेः सर्वथा नैव सिध्यति ॥
किमङ्ग ! बालकानां तु क्षीणधातुबलौजसाम् ।
तथाऽपि यत्नमातिष्ठेदानृशंस्याद्भिषग्वरः ॥
सन्निपातेषु दोषेषु यो दोषो बलवान् भवेत् ।
तमेवादौ प्रशमयेच्छेषं दोषमतः परम् ॥
अल्पान्तरबलेष्वेषु दोषेषु मतिमान् भिषक् ।
श्लेष्माणमादौ शमयेत् स ह्येषामनुबन्धकृत् ॥

---

१ अस्याग्रे पत्रद्वयं लुप्तं ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

गुरुत्वात् कृच्छ्रपाकित्वादूर्ध्वकायाश्रयात्तथा।
तस्माज्ज्वरे यदुद्दिष्टं वातपित्तकफात्मके॥
तस्मात्तस्यामवस्थायां तत्तत् कार्यं चिकित्सितम्।
पिप्पल्यादिवचादारुवयस्थासरलान्वितः॥
पेयः कफोत्तरे सामे सहिङ्गुक्षारसैन्धवः।
दोषास्तेनाशु पच्यन्ते विबन्धश्चोपशाम्यति॥
नागरं कट्फलं धान्यं मुस्तं पर्पटकं वचा।
देवदार्वभया भार्गी भूतीकं दशमं भवेत्॥
शृतं सैन्धवहिङ्गुभ्यां पेयं वातकफोत्तरे।
ऊर्ध्वजत्र्वङ्गरोगाणां ज्वरितानां प्रशस्यते॥
शटीपौष्करपिप्पल्यो बृहती कण्टकारिका।
शुण्ठी कर्कटकी भार्गी दुरालम्भा यवानिका॥
शूलानाहविबन्धघ्नं शट्याद्यं कफवातनुत्।
विडङ्गातिविषे भार्गी पौष्करं चित्रकं शटी॥
शार्ङ्गेष्टा पिप्पली शुण्ठी पिबेद्वातकफोत्तरे।
दुरालभावचादारुपिप्पलीमूलनागरम्॥
........................पुष्करं शटी।
क्वाथं सलवणं देयं हिङ्गुक्षारान्वितं पिबेत्॥
सन्निपाते विबन्धे च वातश्लेष्मोत्तरे ज्वरे।
जीवकर्षभकौ शृङ्गी मूलं पुष्करजं शटी॥
सन्निपातेऽनिलकफे कासे चैषां प्रशस्यते।
बृहत्यौ पुष्करं दारु पिप्पल्यो नागरं शटी॥
क्वाथमेषां पिबेदुष्णमादौ दोषविपाचनम्।
दुरालभा वचा दारु पिप्पली भद्ररोहिणी॥
महौषधं कर्कटकी बृहती कण्टकारिका।
क्वाथः सलवणः पेयः सन्निपातज्वरापहः॥
देवदारु वचा मुस्तं कैरातं कटुरोहिणी।
गुडूची नागरं क्वाथः सन्निपातज्वरापहः॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

उरोग्रहे कण्ठरोगे मुखरोगे च शस्यते ।
त्रिफला रोहिणी निम्बं पटोलं कटुकत्रयम् ॥
पाठा गुडूची वेताग्रं सप्तपर्णः सवत्सकः ।
किराततिक्तकं मुस्ता वचा चेत्येकतः शृतम् ॥
कफोत्तरं निहन्त्येतत् पानादग्निं च दीपयेत् ।
पटोलमुस्तमधुकरोहिणीक्वथितं जलम् ॥
योगमेतं त्रिफलया युक्तं च सुरदारुणा ।
पाययेन्मधुनाऽऽलोड्य सन्निपाते कफोत्तरे ॥
आरग्वधवचानिम्बपटोलोशीरवत्सकम् ।
शार्ङ्गेष्टाऽतिविषा मूर्वा त्रिफला सदुरालभा ॥
भद्रमुस्ता बला पाठा मधुकं भद्ररोहिणी ।
कषाय एष शमयेज्ज्वरमाशु त्रिदोषजम् ॥
जाड्यं सशोफमाध्मानं गुरुत्वं चापकर्षति ।
नागरं दशमूलं च कट्वङ्गं दा............

( इति ताडपत्रपुस्तके २५३[1] तमं पत्रम् )

................................

................................

................शिशुं प्राशयेयुः कथञ्चन ॥
नवसद्यःक्षतानां तद्व्रणानां रोहणं भवेत् ।
क्षतजं प्राप्य हि विषं दर्शयत्यात्मनो बलम् ॥
प्रसादयति तच्चाशु सन्धत्ते च मधु व्रणम् ।
तस्मात् स्वभावतो नॄणां सहोष्णेनाशितं मधु ॥
विरुद्धत्वात्त्रिभिर्दोषैर्जीवितान्ताय कल्पते ।
तुल्यत्वादुष्णयोगाच्च यथा च मधुसर्पिषी ॥
इति ह स्माह भगवान् कश्यपः ॥

(इति) खिलेषु मधुविशेषणीयो नामैकविंशतितमोऽध्यायः ॥ थ १ (२१)

---

१ अस्याग्रे पत्रपञ्चकं खण्डितं ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## क्षीरगुणविशेषीयाध्यायो द्वाविंशतितमः ।

अथातः क्षीरगुणविशेषीयं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
गोर्महिष्या अजायाश्च नार्या उष्ट्र्या अवेः स्त्रियाः ।
तुरङ्ग्या इति चोक्तानि पूर्वमेव पयांसि तु ॥ ३ ॥
भूयश्च गुणवैशेष्यात् क्षीराण्यष्टौ निबोध मे ।
प्रजापतेः पुरेच्छातः प्रजानां प्राणधारणम् ॥ ४ ॥
पञ्चभूतगुणं चापि भूरुहां जन्म कथ्यते ।
वनस्पतीनां वृक्षाणां वानस्पत्यगणस्य च ॥ ५ ॥
वीरुधामोषधीनां च गुल्मानामपि जीवक ! ।
विविधानां तृणानां च सस्यानां चैव देहिनाम् ॥ ६ ॥
एवमादिगणो यस्तु भूमेः सार उदाहृतः ।
सोमस्य वायुतेजोपां बुद्धिश्चेति प्रजापतेः ॥
तदाहारगुणोत्पन्नं गवादीनामतः परम् ।
यथा सर्वौषधीसारं क्षीरोदे मथिते पुरा ॥
संभूतममृतं दिव्यममरा येन देवताः ।
तथा सर्वौषधीसारं गवादीनां तु कुक्षिषु ॥
क्षीरमुत्पद्यते तस्मात् कारणादमृतोपमम् ।
जरायुजानां भूतानां विशेषेण तु जीवनम् ॥
क्षीरं सात्म्यं हि बालानां क्षीरं जीवनमुच्यते ।
क्षीरं पुष्टिकरं वृद्धिकरं बलविवर्धनम् ॥
क्षीरमोजस्करं पुंसां क्षीरं प्राणगुणावहम् ।
गर्भधानकरं क्षीरं बन्ध्यानामपि योषिताम् ॥
क्षीणानां च कृशानां च शोफिनां राजयक्ष्मिणाम् ।
व्यायामश्रमनित्यानां स्त्रीनित्यानां च देहिनाम् ॥
संक्षीणरेतसां चापि गर्भस्रावे च दारुणे ।
रक्तपित्तामयेऽर्शस्सु मदक्षीणे ज्वरे तथा ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

गर्भशोषे च वातानां क्षीरं परममुच्यते ।
सामान्यादिह दुग्धानां पुरा चोक्ता गुणादयः ॥
पृथक्त्वेन च वक्ष्यामि गवादीनां विशेषणम् ।
तृणगुल्मौषधीनां च अग्राग्रं पय एव हि ॥
खादन्ति मधुरप्रायं लवणं च विशेषतः ।
तत्सारगुणवैशेष्याद्गवां क्षीरं प्रशस्यते ॥
मधुरो हि रसः श्रेष्ठो रसानां परिकीर्तितः ।
तन्नित्यं वा गवां क्षीरं मधुरं बृंहणं मतम् ॥
औषधाग्रातिभक्षत्वाद्विरेचयति तत् पयः ।
एतस्मात् कारणादुक्तं गवां क्षीरं रसायनम् ॥
एष वैशेषिकगुणो गोक्षीरस्य प्रकीर्तितः ।
क्रिमिकीटपतङ्गैश्च सर्पैरपि तृणाश्रितैः ॥
सह नानातृणं हीनं महिष्यो भक्षयन्ति हि ।
अवगाहन्ति तोयानि गर्भाणि च विशेषतः ॥
एतस्मात् कारणात्तासां क्षीरं कषायशीतलम् ।
शीतत्वाद्दुर्जरं स्निग्धं (गुरु) दाहनिबर्हणम् ॥
गवां क्षीराच्चाल्पा(गु)णं महिषीणां पयो मतम् ।
अजानामल्पकायत्वात् कटुतिक्तानिबर्हणात् ॥
अल्पत्वाच्च बलित्वाच्च लघु दोषहरं पयः ।
अल्पत्वात्तद्घनं क्षीरं घनत्वादपि बृंहणम् ॥
शीतं संग्राहि मधुरं बल्यं वातानुलोमनम् ।
महाशयतया श्याम(न)मधुरप्रायसेवनात् ॥
बहुत्वाच्च घनत्वाच्च बल्यं पुष्टिकरं पयः ।
गुरु वृष्यं च निर्दिष्टं मधुरं च विशेषतः ॥
अल्पाहारतयोष्ट्रीणां प्रियं चाऽऽलवणं... ॥

(इति ताडपत्रपुस्तके २५९ तमं पत्रम् ।)

१ अस्याग्रे एकं पत्रं खण्डितं ताडपत्रपुस्तके ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

............................ ।
............................ ॥
............................ ।
अतीते प्रथमे मासि प्रावृट्प्रोष्ठपदागमे ॥
दिव्यं खात् पतितं तोयं नाम्ना हंसोदकं शिवम् ।
आपूतं सूर्यतेजोभिरगस्त्येनाऽविषीकृतम् ॥
............................ ।
............................ति ॥
स्निग्धं वृष्यं च बल्यं च हेमन्ते गुरु वर्षति ।
शिशिरे वर्षति जलं कफवातप्रकोपनम् ॥
वसन्ते वर्षति जलं कषायस्वादुरूक्षणम् ।
तत्र............................ ॥
.................. (पति)तं क्षितौ ।
तत् पात्रापेक्षितवति पात्रदोषेण तत्त्वतः ॥
नानारसत्वं भजते तोयं संप्राप्य भूतलम् ।
सर्वाम्बु सद्यःपतितमप्रशस्तमनार्तवम् ॥
त............................ ।
............................रूदकम् ॥
कफानिलकरं पित्ते हितं शीतातिकारकम् ।
रक्तपित्तहरं रूक्षमवश्यायोदकं लघु ॥
एतच्चतुर्विधं प्रोक्तं तत्त्वेनाम्भोऽन्तरिक्षजम् ।
सह्य............................ ॥
......................श्लेष्मप्रकोपनाः ।
क्षारोदाः प्राक्स्रुता नद्यः कफघ्नाः पित्तकोपनाः ॥
लघूदकाः प्रतीचीगा वातलाः कफनाशनाः ।
क्षारं ताभ्यस्तु सामुद्रं मधुरं गुरु पच्यते ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

.................................. ।

....................लवणं जलम् ॥

साभिष्यन्दि स्वादुपाकि शीतं पित्तघ्नमौद्भिदम् ।
सत्त्वक्लेदमलाद्दुष्टं पल्वलाम्बु गुरु स्मृतम् ॥
कषायमधुरं स्वादु विमलं सारसं जलम् ।
कौपं पि........................ ॥
.................................. ।
इत्यष्टधा जलं प्रोक्तं भूमिजं वृद्धजीवक ! ॥
लघु प्रकामं सस्नेहं शीतं सर्वरसान्वितम् ।
तृष्णापहं मनोह्लादि श्लेष्मघ्नं क्रिमिनाशनम् ॥
रक्षोघ्नं जीवनं वृष्यं मूर्च्छाघ्नं......... ।
.................................. ॥
................सूक्ष्मप्राणिसमाकुलम् ।
बहलं कलुषं चैव तथा पिच्छिलमाविलम् ।
ग्रामक्षेत्ररसैर्दुष्टं विषमूलोपदूषितम् ॥
शकुन्तक्रिमिशैवालयुक्तमत्युष्णचिक्कणम् ।
.................................. ॥
................गुर्विणीषु च वर्जयेत् ।
धात्रीणां च विशेषेण स्वस्थानां रोगिणामपि ॥
पूर्वोक्तगुणबाहुल्यात् पानीयं सेव्यमिष्यते ।
विपाके मधुरं शैत्याद्वारि पित्तघ्नमुच्यते ॥
.................................. ।
................णशीतमुष्णमथापि वा ।
भक्तस्य पूर्वं पीतं वा कृशत्वं कुरुते शिशोः ॥
भक्तस्य मध्ये पीतं तन्मध्यमत्वं नियच्छति ।
भक्तस्योपरि पीतं तु पीनत्वं (संप्रयच्छति) ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

.................................. ।
...............निष्क्वाथोष्णाम्बु पाचनम् ॥
श्रमे भेदेषु तृष्णासु मूर्च्छास्वतिपिपासिते ।
निष्क्वाथलाघवादम्बु सलिलं तप्तशीतलम् ॥
निर्दिशेत् सर्वदोषघ्नं बालानां......... ।
.................................. ॥
......................मुष्णोदकं शिशोः ।
रक्तपित्तामयं त्यक्त्वा प्रायो वातकफात्मके ॥
रोगे शिशुर्वा धात्री वा गुर्विणी वोष्णकं पिबेत् ।
क्वचिद्रोगविशेषेण तप्तशीतं हितं बहु ॥

(इति ताडपत्रपुस्तके २६१ तमं पत्रम्)

अथान्तरिक्षं शरदि प्रशस्तं संतप्यमानं च रवेर्मयूखैः ।
पिबेत्सरो वाऽथ नदीं तडागं हेमन्तकाले शिशिरे च बालः ॥
वाप्यौद्भिदं प्रास्रवणं हि तोयं ग्रीष्मे प्रशस्तं कुसुमागमे च ।
वर्षासु कौपं सलिलं प्रशस्तमारोग्यहेतोरथ तप्तशीतलम् ॥

इति ह स्माह भगवान् कश्यपः ॥

(इति) खिलेषु पानीयगुणविशेषीयाध्यायः ॥ (२३)

---

## मांसगुणविशेषीयाध्यायश्चतुर्विंशः ।

अथातो मांसगुणविशेषीयं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
मांसं वृष्यं च बल्यं च मांसं प्राणविवर्धनम् ।
मांसं पुष्टिकरं वृद्धकृशानां मांसवर्धनम् ॥ ३ ॥
क्षयिणां क्षीणदेहानां मांसमेव परायणम् ।
न मांसतुल्यमन्यत्त्वारोग्यवीर्यविवर्धनम् ॥ ४ ॥
नराणां क्षीणशुक्राणां मांसं रेतोविवर्धनम् ।
वन्ध्यानामपि नारीणां कुमाराणां तथैव च ॥ ५ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

गर्भाधानकरं मांसमन्ते पुष्टिकरं तथा ।
गर्भिणीनां च नारीणां वातप्रशमनं परम् ॥ ६ ॥
स्त्रीणां प्रसवकाले तु मांस......मेव च ।
गर्भकाले च बालानां सरसं परमौषधम् ॥ ७ ॥
स्त्रीप्रियाणां तथा पुंसां नित्यव्यायामसेविनाम् ।
क्षीणानां यक्ष्मिणां चैव ज्वरक्षीणाश्च ये नराः ॥ ८ ॥
वाताहतास्तु ये सत्त्वास्तेषां मांसरसो हितः ।
सुसंस्कृतो मांसरसो बिडजीरकहिङ्गुभिः ॥ ९ ॥
स्नेहे सिद्धश्च पयसा विशेषाद्वातिके स्मृतः ।
वातपित्तोत्तरे पुंभिः शर्करामधुरीकृतः ॥ १० ॥
स्निग्धो मांसरसः पेयस्तथा रक्तामयार्दितैः ।
क्षीण(र)सिद्धो मांसरसो मधुरो लवणोऽपि वा ॥ ११ ॥
बालानां क्षीणदेहानां गर्भकाले च शस्यते ।
हितं च बा(ब)लकामानां मांसस्वरससाधितः(म्) ॥ १२ ॥
सुसिद्धं लवणे सिद्धं मांसं कटुकरोचनम् ।
कायाग्निदीपनं चैव रसा......पो हितः ॥ १३ ॥
वेसवारः समधुरो लावणो वाऽपि रोचनः ।
पिष्टचूर्णितपक्वं वा प्रकु...वापिवान्न (?) तत् ॥ १४ ॥
शूल्यमङ्गारतप्तं च मांसं श्लेष्मामये हितम् ।
साम्लः(म्लं) सलवणश्चै(णं चै)व हितस्त(तं त)स्मात्तु जीवक !
पिष्टं वा खण्डशो वाऽपि मांसं पुटकसाधितम् ।
सहिङ्गुसैन्धवबिडैर्मरिचाम्लसजीरकैः ॥ १६ ॥
साङ्कुरैर्धान्यकैश्चैव शृङ्गवेरार्द्रकैरपि ।
पलाशे मूस्तृणोपेतं मांसं सिद्धं प्रयोजयेत् ॥ १७ ॥
अथ मांसरसं(सः) सर्पिःसिद्धं(द्धः) सक्षीरमि(र) इष्यते ।
रसपाकविशेषेण तद्बल्यं(स बल्यः) तद्र(स र)सायनम्(नः)॥१८॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

अतः परं तु मांसानां रसपाकविशेषणम् ।
वक्ष्ये गुणविशेषं च वृद्धजीवक ! तच्छृणु ॥ १९ ॥
कफपित्तकरं मांसं गवां वाते हितं गुरु ।
विदाहि बृंहणं चैव, खड्गमांसं च तत्समम् ॥ २० ॥
न्यङ्कूनां विहितं वाते कफपित्तहरं लघु ।
सक्षारं दान्तिनं मांसं बृंहणं कटुतिक्तकम् ॥ २१ ॥
वीर्येणोष्णं च तद्विद्यात् कफपित्तं करोति च ।
गोकर्णमांसं तत्तुल्यं गवयस्य रुरोरपि ॥ २२ ॥
रसे पाके च मधुरं वातपित्तहरं गुरु ।
उष्णं चैव च्छागमांसमाविकं चापि तद्गुणम् ॥ २३ ॥
वृष्यं तु मांसं वाराहं मधुरं गुरु पच्यते ।
तद्गुणं माहिषं विद्धि, शौकरं स्यात्ततो गुरु ॥ २४ ॥
गर्दभस्य तथाऽश्वस्य मांसं यत् पृषतस्य च ।
कफघ्नं वातलं रूक्षं कटुतिक्ताह्वयं लघु ॥ २५ ॥
श्वदंष्ट्रो वृषदंष्ट्रश्च ऋष्यः शरभ एव च ।
वातघ्ना उष्णवीर्याश्च रसतः कटुकान्वयाः ॥ २६ ॥
गोलाङ्गूला वानराश्च तत्तुल्या मधुरोत्तराः ।
वृकर्क्षकोकजम्बूकाः सिंहा व्याघ्रतरक्षवः ॥ २७ ॥
(इति ताडपत्रपुस्तके २६२ तमं पत्रम्)
स्वाद्यमांसास्त्विमे वृष्या उष्णाः पित्तविवर्धनाः ।
कषायतिक्ता रसतो वातघ्नाः कटुपाकिनः ॥ २८ ॥
नकुलो मूषिकः श्वाविद्भुः शल्यक एव च ।
कषायमधुराः शीता वृष्या गोधाश्च तद्गुणाः ॥ २९ ॥
ये स्युः शशकुरङ्गाद्याः सृमरश्चमराश्च ये ।
लघवो........ष्णाः पित्तला नातिबृंहणाः ॥ ३० ॥
बार्हिणं मधुरोष्णं तु विषघ्नं गुरु बृंहणम् ।
तुल्यं कौक्कुटजं वन्यं, तत्तुल्यं ग्राम्यकौक्कुटम् ॥ ३१ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

विष्किराः क्रौञ्चवर्तीका मयूरेण समाः स्मृताः ।
तस्माल्लघुस्तु वर्तीरो वर्तीका लघवो लघुः ॥ ३२ ॥
तित्तिरिस्तु कटुः पाके सोष्णस्तु कफवातजित् ।
कपिञ्जलश्चकोरश्च उपचक्रश्च तत्समाः ॥ ३३ ॥
लोहपृष्ठो रक्तपृष्ठो रक्ताक्षो जीवजीवकः ।
तथाऽन्ये हिमवज्जाता मधुरा वृष्यंबृंहणाः ॥ ३४ ॥
गुरवः शीतलाः पाके कषाया रसतस्तथा ।
खञ्जरीटो वपुक्कारः ऋकरो दीर्घपुंसकः ॥ ३५ ॥
कोयष्टिकः कपोतश्च रक्तपादो वसन्तकः ।
भृङ्गराजोऽथ हारीतः कोकिलः शुकसारिकाः ॥ ३६ ॥
एते चान्ये च प्रच्छदा (?) शीतमारुतकोपकाः ।
कषायमधुराः स्वादे कफघ्नाः कटुपाकिनः ॥ ३७ ॥
गृध्रः काकः श्येनचाषौ भासोलूककुलिङ्गकाः ।
शशन्ता मूषिकाः कोडास्तथाऽन्ये मांसभोजनाः ॥ ३८ ॥
प्रसहास्ते तु मधुरा वातघ्नाः कटुपाकिनः ।
बृंहणाश्चोष्णवीर्याश्च सततं शोषिणां हिताः ॥ ३९ ॥
प्लवा बका बलाकाश्च तीदार्यः कुररास्तथा ।
.........रक्ताक्षा मल्लिकाक्षाः सवारटाः ॥ ४० ॥
नन्दीमुखा मेघरावाः शराख्या जलकुक्कुटाः ।
समुद्रकाकाः कुहरा गोटुभा गण्डमालकाः ॥ ४१ ॥
कारण्डवाः सजीमूतास्तथाऽन्ये जलचारिणः ।
पाके च मधुरा वृष्या गुरवश्च...... ॥ ४२ ॥
................................ ।
................................ ॥ ४३ ॥
हंसस्तु गुरुरत्यर्थं वृष्योऽथ कफपित्तलः ।
शरारिः पांकहंसश्च चक्रवाकस्तथैव च ॥ ४४ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

जालपादास्तथाऽन्ये च हंसतुल्या गुणैः स्मृताः ।
क्रौञ्चः कुलिङ्गो द्रविडः पद्मपुष्करसादकः ॥ ४५ ॥
वार्ध्रीणसः सारसश्च सारङ्गो धामृण्यलिकः (?) ।
एते चान्ये चाम्बुचराः पक्षिणो गुरवः स्मृताः ॥ ४६ ॥
रसे पाके च मधुरा उष्णाः सलवणान्वयाः ।
वृष्या वातहराश्चैव कफपित्तविवर्धनाः ॥ ४७ ॥
नलमीनो झषश्चैव पाठीनश्चर्मपीवरः ।
चेलीमः शकुलार्भ(द)श्च शिलीन्ध्रो गर्गरस्तथा ॥ ४८ ॥
पुष्करो गोकरो मूचो वारडः शूलपाटलः ।
कृष्णमत्स्यः श्वेतमत्स्यो गोमत्स्यो रोहितस्तथा ॥ ४९ ॥
शकली महाशकली चम्पः कुन्दोऽथ मद्गुरः ।
इल्यः शङ्कुश्चिचरणो राजीवः शफरी तथा ॥ ५० ॥
एते चान्ये च बहवो विविधा मत्स्यजातयः ।
रसे पाके च मधुरा वातघ्ना वृष्यबृंहणाः ॥ ५१ ॥
उष्णवीर्याश्च ते ज्ञेया गुरवः कफपित्तलाः ।
लघ्वाशयास्तेऽन्ये तु किञ्चित्तिक्तान्वयान्तराः ॥ ५२ ॥
रोहितो नलमीनश्च.........लघवः स्मृताः ।
कूर्मो दुटिश्च नक्रश्च मकरोऽवकुशस्तथा ॥ ५३ ॥
तिमिः सहस्रदशनस्तथैव च तिमिङ्गिलः ।
इञ्चकः शुक्तिकः शङ्खोऽवलूको जलसूकरः ॥ ५४ ॥
शम्बूकश्चन्द्रिकः श्रृङ्गी कर्कटः शकुटीपयः ।
एते चान्ये च जलजा मधुरा रसपाकयोः ॥ ५५ ॥
गुरवश्चोष्णवीर्याश्च गुरवः कफपित्तलाः ।
आनूपे तूत्तमश्छागः, श्रेष्ठो मत्स्येषु रोहितः ॥ ५६ ॥
जलजे शुक्तिकूर्मौ च, वारटोऽप्यथ पक्षिषु ।
एणो मृगेषु प्रवरः, प्रतुदेषु शुको वरः ॥ ५७ ॥

( इति ताडपत्रपुस्तके २१२ तमं पत्रम् )

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

विषयेषु......ग्र्यो लावः खगेषु तु ।
तित्तिरो विष्किरेष्वग्र्यः, काकोऽग्र्यः प्रसहेषु तु ॥ ५८ ॥
लघूक्तं रुधिरं मांसाद्गुरु मेदश्च चर्म च ।
मज्जावसे गुरुतरे तेभ्यो गुरु शिरः स्मृतम् ॥ ५९ ॥
लघुः स्कन्धो हि शिरसस्तस्मात् पार्श्वं लघु स्मृतम् ।
पार्श्वात् सक्थि लघु प्रोक्तं पादमांसं गुरु स्मृतम् ॥ ६० ॥
वसा मेदश्च मज्जा च वातपित्तहिताः स्मृताः ।
रसे पाके च मधुरा स्नेहच्छ्लेष्मप्रकोपनाः ॥ ६१ ॥
रक्तं रक्तप्रशमनं मांसं मांसविवर्धनम् ।
गुरवः प्राणिनो बाला, युवानो वृष्यबृंहणाः ॥ ६२ ॥
वृद्धास्तु वातला रूक्षाः, पुंभ्यस्तु लघवः स्त्रियः ।
मृगाल्लघुतरः पक्षी, पक्षिभ्योऽम्बुचरो गुरुः ॥ ६३ ॥
महाशरीराश्चाल्पकाया लघवो जीवक ! स्मृताः ।
विज्ञेयाश्चाल्पभुग्भ्योऽपि गुरवो बहुभोजनाः ॥ ६४ ॥
लघवोऽल्पभूमिचरा, अलसेभ्यो विदूरगाः ।
लघुदेशचरा अल्पा लघवो लघुभोजनाः ॥ ६५ ॥
गुरुदेशचराः स्थूला गुरवो गुरुभोजनाः ।
पाशबद्धं गुरु मांसं रूक्षं क्षुद्व्याधिभिर्हतम् ॥ ६६ ॥
श्वभिर्हतं पीतरक्तं नातिबृंहणमुच्यते ।
विषैर्हतमभक्ष्यं स्याच्छुष्कं नातिगुणावहम् ॥ ६७ ॥
सद्योऽपरिक्लिष्टहतं मांसं धातुं विवर्धयेत् ।
पूतिमांसं गुर्वसारं तदवृष्यमबृंहणम् ॥ ६८ ॥
एवं मांसविशेषज्ञः कल्पयेद्भोजने सदा ।
बालानां गुर्विणीनां वा बालपुत्रासु वा भिषक् ॥ ६९ ॥
दुष्प्रजातासु वा स्त्रीषु बाले वा कृशिते सदा ।
प्रयुञ्जन् सिद्धिमाप्नोति तत्त्वविद्वृद्धजीवक ! ॥ ७० ॥
इति ह स्माह भगवान् कश्यपः ॥

(इति) खिलेषु मांसगुणविशेषीयाध्यायश्चतुर्विंशतितमोऽध्यायः ॥२४॥ चू (७०)

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## देशसात्म्याध्यायः पञ्चविंशः ।

अथातो देशसात्म्याध्यायं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवान् कश्यपः ॥ २ ॥
कश्यपाख्यमृषिश्रेष्ठं पृष्टवान्.........रोचतः ।
देशसात्म्यमजानन्तः कथं कुर्युश्चिकित्सितम् ॥ ३ ॥
कस्य देशस्य मध्ये तु कुरुक्षेत्रं प्रतिष्ठितम् ।
इत्येवमुक्तो भगवान् काशिराजो महामुनिः ॥ ४ ॥
इदमुत्तरमक्लिष्टं व्याख्यातुमुपचक्रमे ।
कुरुक्षेत्रं मध्यदेशाद्योजनानां शतं परम् ॥ ५ ॥
समस्तान् षड्रसान् प्रायो भुञ्जते मध्यदेशजाः ।
भक्ष्यभोज्यान्नवीरास्ते तु भुञ्जन्तो वाऽसकृत्तथा ॥ ६ ॥
पूर्वदेशस्तु विज्ञेयो मधुरः शीतलो गुरुः ।
कुमारवर्तनीमा(चा)दौ कटीवर्षस्तथैव च ॥ ७ ॥
मगधासु महाराष्ट्रमृषभद्वीपमेव च ।
पौण्ड्रवर्धनकं चापि मृत्तिकावर्धमानकम् ॥ ८ ॥
कर्वटं च समातङ्गं ताम(म्र)लिप्तं सचीरकम् ।
प्रियङ्गुमथ कौशल्यं कलिङ्गपृष्ठपूरकम् ॥ ९ ॥
एषु प्लीहविनो मर्त्या गलगण्डिकमे(न ए)व च ।
गुडशाल्योदनप्राया मत्स्यभोजनसेविनः ॥ १० ॥
प्रायशो मधुराहारा वातश्लेष्मात्मका नराः ।
तेषां कटुकतिक्तं च रूक्षमुष्णं च भोजनम् ॥ ११ ॥
यच्चान्यदपि श्लेष्मघ्नं तेषां तत्तत् प्रयोजयेत् ।
कञ्चीपदा नवध्वाना कावीरास्तुल्ययोरपि ॥ १२ ॥
वानसी कुमुदाराज्यं चिरिपालिस्तथैव च ।
चीरराज्यञ्च चोराणां पुलिन्द(न्दं)द्रविडेषु च ॥ १३ ॥
करघाटशनानां च विवे(दे)हा मण्डपेषु च ।
कान्तारं च वराहं च घटास्वाभीरमेव च ॥ १४ ॥
दक्षिणां दिशमाश्रित्य देशा वि.........

( इति ताडपत्रपुस्तके २६४ तमं पत्रम् )



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

....................................................

....................................................

....................................................

....................................................

खिलस्थानस्यैतावानेव भाग उपलब्धः[1] ।

काश्यपसंहिता

## वृद्धजीवकीयतन्त्रं च

एतावत्येवोपलब्धभागे

विश्राम्यति ।



१ खिलान्यशीतिरध्याया इति पूर्वोद्देशानुसारेणाऽस्मादपूर्णपञ्चविंशाध्यायादुत्तरं पञ्चपञ्चाशदध्याया अवशिष्यन्ते, तेनाऽर्धग्रास इवायमकाण्डे विच्छिन्नो ग्रन्थः पूर्तये पुनरनुकूलदैवं समीहते । उक्तं चाभियुक्तैः—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमुखीभूतः ॥ इत्यलम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

# काश्यपसंहिताया विषयानुक्रमणिका।

## सूत्रस्थानम् ।

### लेहाध्यायः ।



### क्षीरोत्पत्त्यध्यायः १९ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## स्वेदाध्यायः २३ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

उपकल्पनीयाध्यायः २४ ।



वेदनाध्यायः २५ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## चिकित्सासंपदीयाध्यायः २६ ।



## रोगाध्यायः २७ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## लक्षणाध्यायः २८ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## विमानस्थानम् ३।

### कर्णायजयावष्ठीवनं(?)विमानम् ?।



### शिष्योपक्रमणीयं विमानम् ?।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## शारीरस्थानम् ४ ।



### असमानगोत्रीयशारीराध्यायः ? ।



### गर्भावक्रान्तिशारीराध्यायः ? ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

# इन्द्रियस्थानम् ५ ।

## ओषधभेषजेन्द्रियाध्यायः १२ ।



# चिकित्सास्थानम् ६ ।

## ज्वरचिकित्साध्यायः १ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

४५

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

---

# सिद्धिस्थानम् ७ ।

## राजपुत्रीया सिद्धिः १ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पृ. पं.

## कल्पस्थानम् ८ ।

### धूपकल्पाध्यायः ४ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

| | पृ. | पं. |
|---|---|---|

## विशेषकल्पाध्यायः ११।



## संहिताकल्पाध्यायः १२।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

# खिलस्थानम् ९।

## विषमज्वरनिर्देशीयाध्यायः १।



## विशेषनिर्देशीयाध्यायः २।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## भैषज्योपक्रमणीयाध्यायः ३ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## यूषनिर्देशीयाध्यायः ४।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## भोज्योपक्रमणीयाध्यायः ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## रक्तगुल्मविनिश्चयाध्यायः ९ ।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## अन्तर्वत्नीचिकित्सिताध्यायः १०।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## आचार्योपाह्वेन वैद्ययादवशर्मणा संपादिता आयुर्वेदीय-ग्रन्थमालायां प्रसिद्धीभूता ग्रन्थाः ।

**रसप्रकाशसुधाकरः**—श्रीयशोधरविरचितः, तथा **रससंकेतकलिका** कायस्थचामुण्डवैद्यविरचिता, एतद्ग्रन्थद्वयमेकत्रवद्धमेवोपलभ्यते । द्वितीयं संस्करणम् । मूल्यं २ रूप्यकौ ।

**गदनिग्रहः**—श्रीशोढलवैद्यविरचितः । अस्य प्रयोगखण्डात्मकः प्रथमो भागः । अस्मिन् खण्डे घृततैलचूर्णगुटिकासवावलेहाख्याः षडधिकाराः सन्ति । द्वितीयं संस्करणम् । मूल्यं २ रूप्यकौ ।

**आयुर्वेदप्रकाशः**—उपाध्यायश्रीमाधवविरचितः । द्वितीयं संस्करणं, मूल्यं २ रूप्यकौ ।

**क्षेमकुतूहलः**—श्रीक्षेमशर्मविरचितः पाकशास्त्रग्रन्थः । मूल्यं १२ आणकाः ।

**राजमार्तण्डः**—श्रीभोजमहाराजविरचितः, **नाडीपरीक्षा** श्रीरावणकृता, **वैद्यमनोरमा**—श्रीकालिदासवैद्यविरचिता, तथा **धाराकल्पः**, एतद्ग्रन्थचतुष्टय-मेकत्रवद्धमेवोपलभ्यते । द्वितीयं संस्करणम् । मूल्यं १॥ रूप्यकः ।

**रसपद्धतिः**—श्रीविन्दुविरचिता श्रीमहादेवविरचितटीकया सहिता, तथा **लोहसर्वस्वं**—श्रीसुरेश्वरविरचितम् । एतद्ग्रन्थद्वयमेकत्रवद्धमेवोपलभ्यते । मूल्यं १॥ रूप्यकः ।

**रसकामधेनुः**—वैद्यवरश्रीचूडामणिसंग्रहीता (उपकरणपाद–धातुसंग्रहपाद–सूतक्रियापादेति पादत्रयात्मकः प्रथमो भागः) । मूल्यं ५ रूप्यकाः ।

### कामशास्त्रग्रन्थाः ।

**अनङ्गरङ्गः**—महाकविश्रीकल्याणमल्लविरचितः । मू. १ रू ।

**पञ्चसायकः**—कविशेखरश्रीज्योतीश्वरविरचितः । मू. १ रू ।

**कन्दर्पचूडामणिः**—वघेलवंशावतंसमहाराजश्रीवीरभद्रदेवविरचितः । (आर्याछन्दोपनिवद्धो वात्स्यायनीयकामसूत्रस्य व्याख्यानरूपः) मू. ३ रू ।

प्रापणभृतिस्तु सर्वेषां ग्राहकैरेव देया भवेत् ।

पुस्तकप्राप्तिस्थानम्—

वैद्य जादवजी त्रिकमजी आचार्य,
कालबादेवीरोड, मुंबई, पोस्ट नं. २.

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## निर्णयसागरमुद्रणालयप्रकाशिता वैद्यकग्रन्थाः ॥

वाग्भटविरचितं

# अष्टाङ्गहृदयम् ।

सूत्र-शारीर-निदान-चिकित्सा-कल्प-उत्तरस्थानसहितम् ।

श्रीमदरुणदत्तप्रणीतया सर्वाङ्गसुन्दराख्यटीकया, हेमाद्रिविरचितया आयुर्वेदरसायनटीकया च विभूषितम् । मूल्यम् रू. १० प्रे. व्य. रू. २

# अष्टाङ्गहृदयम् । (मूलमात्रम्)

पारिभाषिककोष-पाठान्तरैरुपबृंहितम् । मूल्यम् रू. १॥। प्रे. व्य. आ. ॥

---

अग्निवेशकृता चरकदृढबलाभ्यां प्रतिसंस्कृता

# चरकसंहिता ।

चक्रपाणिदत्तविरचितया आयुर्वेददीपिकाव्याख्यया समलङ्कृता ।

मूल्यम् रू. ८ प्रे. व्य. रू. १।

# चरकसंहिता (मूलमात्रा)

मूल्यम् रू. ३ प्रे. व्य. आ. ॥

---

श्रीमहर्षिसुश्रुतप्रणीता

# सुश्रुतसंहिता ।

वैद्यवर-श्रीडल्हणाचार्यविरचितया निबन्धसङ्ग्रहाख्यव्याख्यया निदानस्थानस्य श्रीगयदासविरचितया न्यायचन्द्रिकाख्यपञ्जिकाव्याख्यया च समुल्लसिता ।

अयं ग्रन्थो भगवतो धन्वन्तरेरुपदेशानुगुणं महर्षिश्रीसुश्रुतप्रणीतोऽखिलायुर्वेदनिबन्धेषु मूर्धन्यमणित्वेन वरीवर्ति । निबन्धकृद्धार्दप्रकाशनाय वैद्यवरडल्हणाचार्यरचिता व्याख्यापि सर्वाङ्गसुन्दरत्वेन विराजते । परं च संप्रति निदानस्थानस्य गयदासप्रणीतपञ्जिकाव्याख्यया च समलङ्कृतोयं सर्वाङ्गसुन्दरो ग्रन्थः सर्वेषां सुखावबोधकः स्यात् । मूल्यम् रू. १० प्रे. व्य. रू. १॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

श्रीमन्माधवकरविरचितम्

## माधवनिदानम् ।

'निदाने माधवः प्रोक्तः' इति सर्वसंमतो लोकेऽयं ग्रन्थः सुप्रसिद्ध एवास्ति । अस्मिन् प्रायः सर्वेषां रोगाणां निदान-पूर्वरूप-रूप-उपशय-संप्राप्ति-उपद्रवसाध्यासाध्यविचारादिविषयजातं यथावत् प्रतिपादितमस्ति ।

मूल्यम् रू. २। प्रे. व्य. आ. ॥

---

## योगरत्नाकरः ।

ग्रन्थोऽयं नात्यर्वाचीनोऽखिलभिषग्गणमान्योऽप्यस्ति । अत्र सर्वेषां रोगाणां निदानपूर्विका चिकित्सा सप्रमाणा प्रतिपादितास्ति । तथा विविध-रसायन-कषायाऽऽसवा-ऽरिष्टा-ऽवलेह-गुटिका-पाकादीनां प्रक्रिया-प्रमाणा-ऽनुपानादि-प्रपञ्चोऽपि कृतोऽस्तीत्ययं ग्रन्थ आयुर्वेदीयानामतीवोपयोगीत्यवश्यं संग्राह्यः ।

मूल्यम्. रू. २॥ प्रे. व्य. आ. ॥

---

श्रीमत्पण्डितदामोदरसूनु–शार्ङ्गधराचार्यविरचिता

## शार्ङ्गधरसंहिता ।

भिषग्वर—आढमल्लविरचितदीपिकापण्डितकाशिरामवैद्यविरचितगूढार्थदीपिकाभ्यां टीकाभ्यां संवलिता । मूल्यम् रू. ५ प्रे. व्य. आ. ।॥

## शार्ङ्गधरसंहिता (मूलमात्रा)

अञ्जननिदानसहिता । मूल्यम् रू. १ प्रे. व्य. आ. ।

---

## द्रव्यगुणसंग्रहः ।

अत्र नानाविधौषधीनां गुणागुणविवेचनं सम्यक्कृतमस्ति ।

मूल्यम् १२ आणकाः । प्रे. व्य. आ. ।

प्राप्तिस्थानम्—पाण्डुरङ्ग जावजी,
निर्णयसागरमुद्रणालयाध्यक्षः,
मुंबई नं. २

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

